# नलोपाख्यानम्

https://sa.wikisource.org/s/l

बृहदश्व उवाच।
आसीद्राजा नलो नाम वीरसेनसुतो बली।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः॥३-५०-१॥
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा।
उपर्युपरि सर्वेषामादित्य इव तेजसा॥३-५०-२॥
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः॥३-५०-३॥
ईप्सितो वरनारीणामुदारः संयतेन्द्रियः।
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम्॥३-५०-४॥
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः।
शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः॥३-५०-५॥
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत॥३-५०-६॥
तं स भीमः प्रजाकामस्तोषयामास धर्मवित्।
महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम्॥३-५०-७॥
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ।
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः॥३-५०-८॥
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम्।
उपपन्नान्गुणैः सर्वैर्भीमान्भीमपराक्रमान्॥३-५०-९॥
दमयन्ती तु रूपेण तेजसा यशसा श्रिया।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा॥३-५०-१०॥
अथ तां वयसि प्राप्ते दासीनां समलंकृतम्।
शतं सखीनां च तथा पर्युपास्ते शचीमिव॥३-५०-११॥
तत्र स्म भ्राजते भैमी सर्वाभरणभूषिता।
सखीमध्ये ऽनवद्याङ्गी विद्युत्सौदामिनी यथा।
अतीव रूपसंपन्ना श्रीरिवायतलोचना॥३-५०-१२॥
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित्।
मानुषेष्वपि चान्येषु दृष्टपूर्वा न च श्रुता।
चित्तप्रमाथिनी बाला देवानामपि सुन्दरी॥३-५०-१३॥
नलश्च नरशार्दूलो रूपेणाप्रतिमो भुवि।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम्॥३-५०-१४॥
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात्।
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः॥३-५०-१५॥
तयोरदृष्टकामो ऽभूच्छृण्वतोः सततं गुणान्।
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः॥३-५०-१६॥
अशक्नुवन्नलः कामं तदा धारयितुं हृदा।
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः॥३-५०-१७॥
स ददर्श तदा हंसाञ्जातरूपपरिच्छदान्।
वने विचरतां तेषामेकं जग्राह पक्षिणम्॥३-५०-१८॥
ततो ऽन्तरिक्षगो वाचं व्याजहार तदा नलम्।
न हन्तव्यो ऽस्मि ते राजन्करिष्यामि हि ते प्रियम्॥३-५०-१९॥
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित्॥३-५०-२०॥
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः।

ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः॥३-५०-२१॥
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके।
निपेतुस्ते गरुत्मन्तः सा ददर्शाथ तान्खगान्॥३-५०-२२॥
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे॥३-५०-२३॥
अथ हंसा विससृपुः सर्वतः प्रमदावने।
एकैकशस्ततः कन्यास्तान्हंसान्समुपाद्रवन्॥३-५०-२४॥
दमयन्ती तु यं हंसं समुपाधावदन्तिके।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत्॥३-५०-२५॥
दमयन्ति नलो नाम निषधेषु महीपतिः।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः॥३-५०-२६॥
तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे॥३-५०-२७॥
वयं हि देवगन्धर्वमनुष्योरगराक्षसान्।
दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः॥३-५०-२८॥
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः।
विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत्॥३-५०-२९॥
एवमुक्ता तु हंसेन दमयन्ती विशां पते।
अब्रवीत्तत्र तं हंसं तमप्येवं नलं वद॥३-५०-३०॥
तथेत्युक्त्वाण्डजः कन्यां वैदर्भस्य विशां पते।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत्॥३-५०-३१॥

बृहदश्व उवाच।
दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत।
तदा प्रभृति नस्वस्था नलं प्रति बभूव सा॥३-५१-१॥
ततश्चिन्तापरा दीना विवर्णवदना कृशा।
बभूव दमयन्ती तु निःश्वासपरमा तदा॥३-५१-२॥
ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना।
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित्॥३-५१-३॥
न नक्तं न दिवा शेते हा हेति वदती मुहुः।
तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः॥३-५१-४॥
ततो विदर्भपतये दमयन्त्याः सखीगणः।
न्यवेदयत नस्वस्थां दमयन्तीं नरेश्वर॥३-५१-५॥
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात्।
चिन्तयामास तत्कार्यं सुमहत्स्वां सुतां प्रति॥३-५१-६॥
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम्।
अपश्यदात्मनः कार्यं दमयन्त्याः स्वयंवरम्॥३-५१-७॥
स संनिपातयामास महीपालान्विशां पते।
अनुभूयतामयं वीराः स्वयंवर इति प्रभो॥३-५१-८॥
श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम्।
अभिजग्मुस्तदा भीमं राजानो भीमशासनात्॥३-५१-९॥
हस्त्यश्वरथघोषेण नादयन्तो वसुंधराम्।
विचित्रमाल्याभरणैर्बलैर्दृश्यैः स्वलंकृतैः॥३-५१-१०॥
एतस्मिन्नेव काले तु पुराणावृषिसत्तमौ।
अटमानौ महात्मानाविन्द्रलोकमितो गतौ॥३-५१-११॥
नारदः पर्वतश्चैव महात्मानौ महाव्रतौ।
देवराजस्य भवनं विविशाते सुपूजितौ॥३-५१-१२॥
तावर्चित्वा सहस्राक्षस्ततः कुशलमव्ययम्।
पप्रच्छानामयं चापि तयोः सर्वगतं विभुः॥३-५१-१३॥

नारद उवाच।
आवयोः कुशलं देव सर्वत्रगतमीश्वर।
लोके च मघवन्कृत्स्ने नृपाः कुशलिनो विभो॥३-५१-१४॥
बृहदश्व उवाच।
नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा।
धर्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः॥३-५१-१५॥
शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः।
अयं लोको ऽक्षयस्तेषां यथैव मम कामधुक्॥३-५१-१६॥
क्व नु ते क्षत्रियाः शूरा न हि पश्यामि तानहम्।
आगच्छतो महीपालानतिथीन्दयितान्मम॥३-५१-१७॥
एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत।
शृणु मे भगवन्येन न दृश्यन्ते महीक्षितः॥३-५१-१८॥
विदर्भराजदुहिता दमयन्तीति विश्रुता।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः॥३-५१-१९॥
तस्याः स्वयंवरः शक्र भविता नचिरादिव।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः॥३-५१-२०॥
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः।
काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन॥३-५१-२१॥
एतस्मिन्कथ्यमाने तु लोकपालाश्च साग्निकाः।
आजग्मुर्देवराजस्य समीपममरोत्तमाः॥३-५१-२२॥
ततस्तच्छुश्रुवुः सर्वे नारदस्य वचो महत्।
श्रुत्वा चैवाब्रुवन्हृष्टा गच्छामो वयमप्युत॥३-५१-२३॥
ततः सर्वे महाराज सगणाः सहवाहनाः।
विदर्भानभितो जग्मुर्यत्र सर्वे महीक्षितः॥३-५१-२४॥
नलो ऽपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम्।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः॥३-५१-२५॥
अथ देवाः पथि नलं ददृशुर्भूतले स्थितम्।
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसंपदा॥३-५१-२६॥
तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम्।
तस्थुर्विगतसंकल्पा विस्मिता रूपसंपदा॥३-५१-२७॥
ततो ऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात्॥३-५१-२८॥
भो भो नैषध राजेन्द्र नल सत्यव्रतो भवान्।
अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम॥३-५१-२९॥
बृहदश्व उवाच।
तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत।
अथैनान्परिपप्रच्छ कृताञ्जलिरवस्थितः॥३-५२-१॥
के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः।
किं च तत्र मया कार्यं कथयध्वं यथातथम्॥३-५२-२॥
एवमुक्ते नैषधेन मघवान्प्रत्यभाषत।
अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान्॥३-५२-३॥
अहमिन्द्रो ऽयमग्निश्च तथैवायमपांपतिः।
शरीरान्तकरो नृणां यमो ऽयमपि पार्थिव॥३-५२-४॥
स वै त्वमागतानस्मान्दमयन्त्यै निवेदय।
लोकपालाः सहेन्द्रास्त्वां समायान्ति दिदृक्षवः॥३-५२-५॥
प्राप्तुमिच्छन्ति देवास्त्वां शक्रो ऽग्निर्वरुणो यमः।
तेषामन्यतमं देवं पतित्वे वरयस्व ह॥३-५२-६॥
एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत्।
एकार्थसमवेतं मां न प्रेषयितुमर्हथ॥३-५२-७॥

देवा ऊचुः।
करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध।
न करिष्यसि कस्मात्त्वं व्रज नैषध माचिरम्॥३-५२-८॥
बृहदश्व उवाच।
एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत्।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे॥३-५२-९॥
प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत।
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम्॥३-५२-१०॥
ददर्श तत्र वैदर्भीं सखीगणसमावृताम्।
देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम्॥३-५२-११॥
अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम्।
आक्षिपन्तीमिव च भाः शशिनः स्वेन तेजसा॥३-५२-१२॥
तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम्।
सत्यं चिकीर्षमाणस्तु धारयामास हृच्छयम्॥३-५२-१३॥
ततस्ता नैषधं दृष्ट्वा संभ्रान्ताः परमाङ्गनाः।
आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः॥३-५२-१४॥
प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः।
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यचिन्तयन्॥३-५२-१५॥
अहो रूपमहो कान्तिरहो धैर्यं महात्मनः।
को ऽयं देवो नु यक्षो नु गन्धर्वो नु भविष्यति॥३-५२-१६॥
न त्वेनं शक्नुवन्ति स्म व्याहर्तुमपि किंचन।
तेजसा धर्षिताः सर्वा लज्जावत्यो वराङ्गनाः॥३-५२-१७॥
अथैनं स्मयमानेव स्मितपूर्वाभिभाषिणी।
दमयन्ती नलं वीरमभ्यभाषत विस्मिता॥३-५२-१८॥
कस्त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन।
प्राप्तो ऽस्यमरवद्वीर ज्ञातुमिच्छामि ते ऽनघ॥३-५२-१९॥
कथमागमनं चेह कथं चासि न लक्षितः।
सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः॥३-५२-२०॥
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह।
नलं मां विद्धि कल्याणि देवदूतमिहागतम्॥३-५२-२१॥
देवास्त्वां प्राप्तुमिच्छन्ति शक्रो ऽग्निर्वरुणो यमः।
तेषामन्यतमं देवं पतिं वरय शोभने॥३-५२-२२॥
तेषामेव प्रभावेन प्रविष्टो ऽहमलक्षितः।
प्रविशन्तं हि मां कश्चिन्नापश्यन्नाप्यवारयत्॥३-५२-२३॥
एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः।
एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि॥३-५२-२४॥
बृहदश्व उवाच।
सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत्।
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते॥३-५३-१॥
अहं चैव हि यच्चान्यन्ममास्ति वसु किंचन।
सर्वं तत्तव विश्रब्धं कुरु प्रणयमीश्वर॥३-५३-२॥
हंसानां वचनं यत्तत्तन्मां दहति पार्थिव।
त्वत्कृते हि मया वीर राजानः संनिपातिताः॥३-५३-३॥
यदि चेद्भजमानां मां प्रत्याख्यास्यसि मानद।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात्॥३-५३-४॥
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि॥३-५३-५॥
येषामहं लोककृतामीश्वराणां महात्मनाम्।
न पादरजसा तुल्यो मनस्ते तेषु वर्तताम्॥३-५३-६॥

विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान्॥३-५३-७॥
ततो बाष्पकलां वाचं दमयन्ती शुचिस्मिता।
प्रव्याहरन्ती शनकैर्नलं राजानमब्रवीत्॥३-५३-८॥
अस्त्युपायो मया दृष्टो निरपायो नरेश्वर।
येन दोषो न भविता तव राजन्कथंचन॥३-५३-९॥
त्वं चैव हि नरश्रेष्ठ देवाश्चाग्निपुरोगमाः।
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः॥३-५३-१०॥
ततो ऽहं लोकपालानां संनिधौ त्वां नरेश्वर।
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति॥३-५३-११॥
एवमुक्तस्तु वैदर्भ्या नलो राजा विशां पते।
आजगाम पुनस्तत्र यत्र देवाः समागताः॥३-५३-१२॥
तमपश्यंस्तथायान्तं लोकपालाः सहेश्वराः।
दृष्ट्वा चैनं ततो ऽपृच्छन्वृत्तान्तं सर्वमेव तत्॥३-५३-१३॥
देवा ऊचुः।
कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता।
किमब्रवीच्च नः सर्वान्वद भूमिपते ऽनघ॥३-५३-१४॥
नल उवाच।
भवद्भिरहमादिष्टो दमयन्त्या निवेशनम्।
प्रविष्टः सुमहाकक्ष्यं दण्डिभिः स्थविरैर्वृतम्॥३-५३-१५॥
प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः।
ऋते तां पार्थिवसुतां भवतामेव तेजसा॥३-५३-१६॥
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः।
विस्मिताश्चाभवन्दृष्ट्वा सर्वा मां विबुधेश्वराः॥३-५३-१७॥
वर्ण्यमानेषु च मया भवत्सु रुचिरानना।
मामेव गतसंकल्पा वृणीते सुरसत्तमाः॥३-५३-१८॥
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः।
त्वया सह नरश्रेष्ठ मम यत्र स्वयंवरः॥३-५३-१९॥
तेषामहं संनिधौ त्वां वरयिष्ये नरोत्तम।
एवं तव महाबाहो दोषो न भवितेति ह॥३-५३-२०॥
एतावदेव विबुधा यथावृत्तमुदाहृतम्।
मयाशेषं प्रमाणं तु भवन्तस्त्रिदशेश्वराः॥३-५३-२१॥
बृहदश्व उवाच।
अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणो तथा।
आजुहाव महीपालान्भीमो राजा स्वयंवरे॥३-५४-१॥
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः॥३-५४-२॥
कनकस्तम्भरुचिरं तोरणोन विराजितम्।
विविशुस्ते महारङ्गं नृपाः सिंहा इवाचलम्॥३-५४-३॥
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः।
सुरभिस्रग्धराः सर्वे सुमृष्टमणिकुण्डलाः॥३-५४-४॥
तां राजसमितिं पूर्णां नागैर्भोगवतीमिव।
संपूर्णां पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव॥३-५४-५॥
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः।
आकारवन्तः सुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः॥३-५४-६॥
सुकेशान्तानि चारूणि सुनासानि शुभानि च।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि॥३-५४-७॥
दमयन्ती ततो रङ्गं प्रविवेश शुभानना।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च॥३-५४-८॥

तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम्।
तत्र तत्रैव सक्ताभून्न चचाल च पश्यताम्॥३-५४-९॥
ततः संकीर्त्यमानेषु राज्ञां नामसु भारत।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनिव॥३-५४-१०॥
तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान्।
संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम्।
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम्॥३-५४-११॥
सा चिन्तयन्ती बुद्ध्याथ तर्कयामास भामिनी।
कथं नु देवाञ्जानीयां कथं विद्यां नलं नृपम्॥३-५४-१२॥
एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता।
श्रुतानि देवलिङ्गानि चिन्तयामास भारत॥३-५४-१३॥
देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे।
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये॥३-५४-१४॥
सा विनिश्चित्य बहुधा विचार्य च पुनः पुनः।
शरणं प्रति देवानां प्राप्तकालममन्यत॥३-५४-१५॥
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा।
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत्॥३-५४-१६॥
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे॥३-५४-१७॥
वाचा च मनसा चैव यथा नाभिचराम्यहम्।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे॥३-५४-१८॥
यथा देवैः स मे भर्ता विहितो निषधाधिपः।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे॥३-५४-१९॥
स्वं चैव रूपं पुष्यन्तु लोकपालाः सहेश्वराः।
यथाहमभिजानीयां पुण्यश्लोकं नराधिपम्॥३-५४-२०॥
निशम्य दमयन्त्यास्तत्करुणं परिदेवितम्।
निश्चयं परमं तथ्यमनुरागं च नैषधे॥३-५४-२१॥
मनोविशुद्धिं बुद्धिं च भक्तिं रागं च भारत।
यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे॥३-५४-२२॥
सापश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान्।
हृषितस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम्॥३-५४-२३॥
छायाद्वितीयो म्लानस्रग्रजःस्वेदसमन्वितः।
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः॥३-५४-२४॥
सा समीक्ष्य ततो देवान्पुण्यश्लोकं च भारत।
नैषधं वरयामास भैमी धर्मेण भारत॥३-५४-२५॥
विलज्जमाना वस्त्रान्ते जग्राहायतलोचना।
स्कन्धदेशे ऽसृजच्चास्य स्रजं परमशोभनाम्।
वरयामास चैवैनं पतित्वे वरवर्णिनी॥३-५४-२६॥
ततो हा हेति सहसा शब्दो मुक्तो नराधिपैः।
देवैर्महर्षिभिश्चैव साधु साध्विति भारत।
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम्॥३-५४-२७॥
वृते तु नैषधे भैम्या लोकपाला महौजसः।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः॥३-५४-२८॥
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम्।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः॥३-५४-२९॥
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः॥३-५४-३०॥
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम्।
अपांपतिरपां भावं यत्र वाञ्छति नैषधः॥३-५४-३१॥

स्रजं चोत्तमगन्धाढ्यां सर्वे च मिथुनं ददुः।
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः॥३-५४-३२॥
पार्थिवाश्चानुभूयास्या विवाहं विस्मयान्विताः।
दमयन्त्याः प्रमुदिताः प्रतिजग्मुर्यथागतम्॥३-५४-३३॥
अवाप्य नारीरत्नं तत्पुण्यश्लोको ऽपि पार्थिवः।
रेमे सह तया राजा शच्येव बलवृत्रहा॥३-५४-३४॥
अतीव मुदितो राजा भ्राजमानो ऽंशुमानिव।
अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन्॥३-५४-३५॥
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः।
अन्यैश्च क्रतुभिर्धीमान्बहुभिश्चाप्तदक्षिणैः॥३-५४-३६॥
पुनश्च रमणीयेषु वनेषूपवनेषु च।
दमयन्त्या सह नलो विजहारामरोपमः॥३-५४-३७॥
एवं स यजमानश्च विहरंश्च नराधिपः।
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः॥३-५४-३८॥
बृहदश्व उवाच।
वृते तु नैषधे भैम्या लोकपाला महौजसः।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह॥३-५५-१॥
अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा।
द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि॥३-५५-२॥
ततो ऽब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम्।
गत्वाहं वरयिष्ये तां मनो हि मम तद्गतम्॥३-५५-३॥
तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः।
वृतस्तया नलो राजा पतिरस्मत्समीपतः॥३-५५-४॥
एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः।
देवानामन्त्र्य तान्सर्वानुवाचेदं वचस्तदा॥३-५५-५॥
देवानां मानुषं मध्ये यत्सा पतिमविन्दत।
ननु तस्या भवेन्न्याय्यं विपुलं दण्डधारणम्॥३-५५-६॥
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः।
अस्माभिः समनुज्ञातो दमयन्त्या नलो वृतः॥३-५५-७॥
कश्च सर्वगुणोपेतं नाश्रयेत नलं नृपम्।
यो वेद धर्मानखिलान्यथावच्चरितव्रतः॥३-५५-८॥
यस्मिन्सत्यं धृतिर्दानं तपः शौचं दमः शमः।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे॥३-५५-९॥
आत्मानं स शपेन्मूढो हन्याच्चात्मानमात्मना।
एवंगुणं नलं यो वै कामयेच्छपितुं कले॥३-५५-१०॥
कृच्छ्रे स नरके मज्जेदगाधे विपुले ऽप्लवे।
एवमुक्त्वा कलिं देवा द्वापरं च दिवं ययुः॥३-५५-११॥
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत्।
संहर्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर॥३-५५-१२॥
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते।
त्वमप्यक्षान्समाविश्य कर्तुं साहाय्यमर्हसि॥३-५५-१३॥
बृहदश्व उवाच।
एवं स समयं कृत्वा द्वापरेण कलिः सह।
आजगाम ततस्तत्र यत्र राजा स नैषधः॥३-५६-१॥
स नित्यमन्तरप्रेक्षी निषधेष्ववसच्चिरम्।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम्॥३-५६-२॥
कृत्वा मूत्रमुपस्पृश्य संध्यामास्ते स्म नैषधः।
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत्॥३-५६-३॥
स समाविश्य तु नलं समीपं पुष्करस्य ह।

गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै॥३-५६-४॥
अक्षद्यूते नलं जेता भवान्हि सहितो मया।
निषधान्प्रतिपद्यस्व जित्वा राजन्नलं नृपम्॥३-५६-५॥
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात्।
कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात्॥३-५६-६॥
आसाद्य तु नलं वीरं पुष्करः परवीरहा।
दीव्यावेत्यब्रवीद्भ्राता वृषेणोति मुहुर्मुहुः॥३-५६-७॥
न चक्षमे ततो राजा समाह्वानं महामनाः।
वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत॥३-५६-८॥
हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम्।
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा॥३-५६-९॥
तमक्षमदसंमत्तं सुहृदां न तु कश्चन।
निवारणो ऽभवच्छक्तो दीव्यमानमचेतसम्॥३-५६-१०॥
ततः पौरजनः सर्वो मन्त्रिभिः सह भारत।
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम्॥३-५६-११॥
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत्।
एष पौरजनः सर्वो द्वारि तिष्ठति कार्यवान्॥३-५६-१२॥
निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः।
अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः॥३-५६-१३॥
ततः सा बाष्पकलया वाचा दुःखेन कर्शिता।
उवाच नैषधं भैमी शोकोपहतचेतना॥३-५६-१४॥
राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः।
मन्त्रिभिः सहितः सर्वै राजभक्तिपुरस्कृतः।
तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत॥३-५६-१५॥
तां तथा रुचिरापाङ्गीं विलपन्तीं सुमध्यमाम्।
आविष्टः कलिना राजा नाभ्यभाषत किंचन॥३-५६-१६॥
ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः।
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान्॥३-५६-१७॥
तथा तदभवद्द्यूतं पुष्करस्य नलस्य च।
युधिष्ठिर बहून्मासान्पुण्यश्लोकस्त्वजीयत॥३-५६-१८॥
बृहदश्व उवाच।
दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम्।
उन्मत्तवदनुन्मत्ता देवने गतचेतसम्॥३-५७-१॥
भयशोकसमाविष्टा राजन्भीमसुता ततः।
चिन्तयामास तत्कार्यं सुमहत्पार्थिवं प्रति॥३-५७-२॥
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम्।
नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत्॥३-५७-३॥
बृहत्सेने व्रजामात्यानानाय्य नलशासनात्।
आचक्ष्व यद्धृतं द्रव्यमवशिष्टं च यद्वसु॥३-५७-४॥
ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम्।
अपि नो भागधेयं स्यादित्युक्त्वा पुनराव्रजन्॥३-५७-५॥
तास्तु सर्वाः प्रकृतयो द्वितीयं समुपस्थिताः।
न्यवेदयद्भीमसुता न च तत्प्रत्यनन्दत॥३-५७-६॥
वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा।
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह॥३-५७-७॥
निशम्य सततं चाक्षान्पुण्यश्लोकपराङ्मुखान्।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह॥३-५७-८॥
बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात्।
सूतमानय कल्याणि महत्कार्यमुपस्थितम्॥३-५७-९॥

बृहत्सेना तु तच्छ्रुत्वा दमयन्त्याः प्रभाषितम्।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः॥३-५७-१०॥
वार्ष्णेयं तु ततो भैमी सान्त्वयञ्श्लक्ष्णया गिरा।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता॥३-५७-११॥
जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि।
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि॥३-५७-१२॥
यथा यथा हि नृपतिः पुष्करेणेह जीयते।
तथा तथास्य द्यूते वै रागो भूयो ऽभिवर्धते॥३-५७-१३॥
यथा च पुष्करस्याक्षा वर्तन्ते वशवर्तिनः।
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते॥३-५७-१४॥
सुहृत्स्वजनवाक्यानि यथावन्न शृणोति च।
नूनं मन्ये न शेषो ऽस्ति नैषधस्य महात्मनः॥३-५७-१५॥
यत्र मे वचनं राजा नाभिनन्दति मोहितः।
शरणं त्वां प्रपन्नास्मि सारथे कुरु मद्वचः।
न हि मे शुध्यते भावः कदाचिद्विनशेदिति॥३-५७-१६॥
नलस्य दयितानश्वान्योजयित्वा महाजवान्।
इदमारोप्य मिथुनं कुण्डिनं यातुमर्हसि॥३-५७-१७॥
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा।
अश्वांश्चैतान्यथाकामं वस वान्यत्र गच्छ वा॥३-५७-१८॥
दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः।
न्यवेदयदशेषेण नलामात्येषु मुख्यशः॥३-५७-१९॥
तैः समेत्य विनिश्चित्य सो ऽनुज्ञातो महीपते।
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना॥३-५७-२०॥
हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम्।
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम्॥३-५७-२१॥
आमन्त्र्य भीमं राजानमार्तः शोचन्नलं नृपम्।
अटमानस्ततो ऽयोध्यां जगाम नगरीं तदा॥३-५७-२२॥
ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः।
भृतिं चोपययौ तस्य सारथ्येन महीपते॥३-५७-२३॥
बृहदश्व उवाच।
ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः।
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किंचन॥३-५८-१॥
हृतराज्यं नलं राजन्प्रहसन्पुष्करो ऽब्रवीत्।
द्यूतं प्रवर्ततां भूयः प्रतिपाणो ऽस्ति कस्तव॥३-५८-२॥
शिष्टा ते दमयन्त्येका सर्वमन्यद्धृतं मया।
दमयन्त्याः पणः साधु वर्ततां यदि मन्यसे॥३-५८-३॥
पुष्करेणेवमुक्तस्य पुण्यश्लोकस्य मन्युना।
व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत्॥३-५८-४॥
ततः पुष्करमालोक्य नलः परममन्युमान्।
उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः॥३-५८-५॥
एकवासा असंवीतः सुहृच्छोकविवर्धनः।
निश्चक्राम तदा राजा त्यक्त्वा सुविपुलां श्रियम्॥३-५८-६॥
दमयन्त्येकवस्त्रा तं गच्छन्तं पृष्ठतो ऽन्वियात्।
स तया बाह्यतः सार्धं त्रिरात्रं नैषधो ऽवसत्॥३-५८-७॥
पुष्करस्तु महाराज घोषयामास वै पुरे।
नले यः सम्यगातिष्ठेत्स गच्छेद्वध्यतां मम॥३-५८-८॥
पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च।
पौरा न तस्मिन्सत्कारं कृतवन्तो युधिष्ठिर॥३-५८-९॥
स तथा नगराभ्याशे सत्कारार्हो न सत्कृतः।

त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन्॥३-५८-१०॥
क्षुधा संपीड्यमानस्तु नलो बहुतिथे ऽहनि।
अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान्॥३-५८-११॥
स चिन्तयामास तदा निषधाधिपतिर्बली।
अस्ति भक्षो ममाद्यायं वसु चेदं भविष्यति॥३-५८-१२॥
ततस्तानन्तरीयेण वाससा समवास्तृणोत्।
तस्यान्तरीयमादाय जग्मुः सर्वे विहायसा॥३-५८-१३॥
उत्पतन्तः खगास्ते तु वाक्यमाहुस्तदा नलम्।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम्॥३-५८-१४॥
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः।
आगता न हि नः प्रीतिः सवाससि गते त्वयि॥३-५८-१५॥
तान्समीक्ष्य गतानक्षानात्मानं च विवाससम्।
पुण्यश्लोकस्ततो राजा दमयन्तीमथाब्रवीत्॥३-५८-१६॥
येषां प्रकोपादैश्वर्यात्प्रच्युतो ऽहमनिन्दिते।
प्राणयात्रां न विन्दे च दुःखितः क्षुधयार्दितः॥३-५८-१७॥
येषां कृते न सत्कारमकुर्वन्मयि नैषधाः।
त इमे शकुना भूत्वा वासो ऽप्यपहरन्ति मे॥३-५८-१८॥
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः।
भर्ता ते ऽहं निबोधेदं वचनं हितमात्मनः॥३-५८-१९॥
एते गच्छन्ति बहवः पन्थानो दक्षिणापथम्।
अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम्॥३-५८-२०॥
एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा।
आश्रमाश्च महर्षीणाममी पुष्पफलान्विताः॥३-५८-२१॥
एष पन्था विदर्भाणामयं गच्छति कोसलान्।
अतः परं च देशो ऽयं दक्षिणो दक्षिणापथः॥३-५८-२२॥
ततः सा बाष्पकलया वाचा दुःखेन कर्शिता।
उवाच दमयन्ती तं नैषधं करुणं वचः॥३-५८-२३॥
उद्वेपते मे हृदयं सीदन्त्यङ्गानि सर्वशः।
तव पार्थिव संकल्पं चिन्तयन्त्याः पुनः पुनः॥३-५८-२४॥
हृतराज्यं हृतधनं विवस्त्रं क्षुच्छ्रमान्वितम्।
कथमुत्सृज्य गच्छेयमहं त्वां विजने वने॥३-५८-२५॥
श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम्।
वने घोरे महाराज नाशयिष्यामि ते क्लमम्॥३-५८-२६॥
न च भार्यासमं किंचिद्विद्यते भिषजां मतम्।
औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते॥३-५८-२७॥
नल उवाच।
एवमेतद्यथात्थ त्वं दमयन्ति सुमध्यमे।
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम्॥३-५८-२८॥
न चाहं त्यक्तुकामस्त्वां किमर्थं भीरु शङ्कसे।
त्यजेयमहमात्मानं न त्वेव त्वामनिन्दिते॥३-५८-२९॥
दमयन्त्युवाच।
यदि मां त्वं महाराज न विहातुमिहेच्छसि।
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते॥३-५८-३०॥
अवैमि चाहं नृपते न त्वं मां त्यक्तुमर्हसि।
चेतसा त्वपकृष्टेन मां त्यजेथा महापते॥३-५८-३१॥
पन्थानं हि ममाभीक्ष्णमाख्यासि नरसत्तम।
अतोनिमित्तं शोकं मे वर्धयस्यमरप्रभ॥३-५८-३२॥
यदि चायमभिप्रायस्तव राजन्व्रजेदिति।
सहितावेव गच्छावो विदर्भान्यदि मन्यसे॥३-५८-३३॥

विदर्भराजस्तत्र त्वां पूजयिष्यति मानद।
तेन त्वं पूजितो राजन्सुखं वत्स्यसि नो गृहे॥३-५८-३४॥
नल उवाच।
यथा राज्यं पितुस्ते तत्तथा मम न संशयः।
न तु तत्र गमिष्यामि विषमस्थः कथंचन॥३-५९-१॥
कथं समृद्धो गत्वाहं तव हर्षविवर्धनः।
परिद्यूनो गमिष्यामि तव शोकविवर्धनः॥३-५९-२॥
बृहदश्व उवाच।
इति ब्रुवन्नलो राजा दमयन्तीं पुनः पुनः।
सान्त्वयामास कल्याणीं वाससो ऽर्धेन संवृताम्॥३-५९-३॥
तावेकवस्त्रसंवीतावटमानावितस्ततः।
क्षुत्पिपासापरिश्रान्तौ सभां कांचिदुपेयतुः॥३-५९-४॥
तां सभामुपसंप्राप्य तदा स निषधाधिपः।
वैदर्भ्या सहितो राजा निषसाद महीतले॥३-५९-५॥
स वै विवस्त्रो मलिनो विकचः पांसुगुण्ठितः।
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले॥३-५९-६॥
दमयन्त्यपि कल्याणी निद्रयापहृता ततः।
सहसा दुःखमासाद्य सुकुमारी तपस्विनी॥३-५९-७॥
सुप्तायां दमयन्त्यां तु नलो राजा विशां पते।
शोकोन्मथितचित्तात्मा न स्म शेते यथा पुरा॥३-५९-८॥
स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान्॥३-५९-९॥
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः।
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा॥३-५९-१०॥
मामियं ह्यनुरक्तेदं दुःखमाप्नोति मत्कृते।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति॥३-५९-११॥
मया निःसंशयं दुःखमियं प्राप्स्यत्यनुत्तमा।
उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित्॥३-५९-१२॥
स विनिश्चित्य बहुधा विचार्य च पुनः पुनः।
उत्सर्गे ऽमन्यत श्रेयो दमयन्त्या नराधिपः॥३-५९-१३॥
सो ऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम्।
चिन्तयित्वाध्यगाद्राजा वस्त्रार्धस्यावकर्तनम्॥३-५९-१४॥
कथं वासो विकर्तेयं न च बुध्येत मे प्रिया।
चिन्त्यैवं नैषधो राजा सभां पर्यचरत्तदा॥३-५९-१५॥
परिधावन्नथ नल इतश्चेतश्च भारत।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम्॥३-५९-१६॥
तेनार्धं वाससश्छित्त्वा निवस्य च परंतपः।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनः॥३-५९-१७॥
ततो निबद्धहृदयः पुनरागम्य तां सभाम्।
दमयन्तीं तथा दृष्ट्वा रुरोद निषधाधिपः॥३-५९-१८॥
यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम्।
सेयमद्य सभामध्ये शेते भूमावनाथवत्॥३-५९-१९॥
इयं वस्त्रावकर्तेन संवीता चारुहासिनी।
उन्मत्तेव वरारोहा कथं बुद्ध्वा भविष्यति॥३-५९-२०॥
कथमेका सती भैमी मया विरहिता शुभा।
चरिष्यति वने घोरे मृगव्यालनिषेविते॥३-५९-२१॥
गत्वा गत्वा नलो राजा पुनरेति सभां मुहुः।
आकृष्यमाणः कलिना सौहृदेनापकृष्यते॥३-५९-२२॥
द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा।

दोलेव मुहुरायाति याति चैव सभां मुहुः॥३-५९-२३॥
सो ऽपकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु॥३-५९-२४॥
नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्नृपः।
जगामैव वने शून्ये भार्यामुत्सृज्य दुःखितः॥३-५९-२५॥
बृहदश्व उवाच।
अपक्रान्ते नले राजन्दमयन्ती गतक्लमा।
अबुध्यत वरारोहा संत्रस्ता विजने वने॥३-६०-१॥
सापश्यमाना भर्तारं दुःखशोकसमन्विता।
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम्॥३-६०-२॥
हा नाथ हा महाराज हा स्वामिन्किं जहासि माम्।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने॥३-६०-३॥
ननु नाम महाराज धर्मज्ञः सत्यवागसि।
कथमुक्त्वा तथासत्यं सुप्तामुत्सृज्य मां गतः॥३-६०-४॥
कथमुत्सृज्य गन्तासि वश्यां भार्यामनुव्रताम्।
विशेषतो ऽनपकृते परेणापकृते सति॥३-६०-५॥
शक्ष्यसे ता गिरः सत्याः कर्तुं मयि नरेश्वर।
यास्त्वया लोकपालानां संनिधौ कथिताः पुरा॥३-६०-६॥
पर्याप्तः परिहासो ऽयमेतावान्पुरुषर्षभ।
भीताहमस्मि दुर्धर्ष दर्शयात्मानमीश्वर॥३-६०-७॥
दृश्यसे दृश्यसे राजन्नेष तिष्ठसि नैषध।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे॥३-६०-८॥
नृशंसं बत राजेन्द्र यन्मामेवंगतामिह।
विलपन्तीं समालिङ्ग्य नाश्वासयसि पार्थिव॥३-६०-९॥
न शोचाम्यहमात्मानं न चान्यदपि किंचन।
कथं नु भवितास्येक इति त्वां नृप शोचिमि॥३-६०-१०॥
कथं नु राजंस्तृषितः क्षुधितः श्रमकर्शितः।
सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि॥३-६०-११॥
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना।
इतश्चेतश्च रुदती पर्यधावत दुःखिता॥३-६०-१२॥
मुहुरुत्पतते बाला मुहुः पतति विह्वला।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति॥३-६०-१३॥
सा तीव्रशोकसंतप्ता मुहुर्निःश्वस्य विह्वला।
उवाच भैमी निष्क्रम्य रोदमाना पतिव्रता॥३-६०-१४॥
यस्याभिशापाद्दुःखार्तो दुःखं विन्दति नैषधः।
तस्य भूतस्य तद्दुःखाद्दुःखमभ्यधिकं भवेत्॥३-६०-१५॥
अपापचेतसं पापो य एवं कृतवान्नलम्।
तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम्॥३-६०-१६॥
एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः।
अन्वेषति स्म भर्तारं वने श्वापदसेविते॥३-६०-१७॥
उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः।
हा हा राजन्निति मुहुरितश्चेतश्च धावति॥३-६०-१८॥
तां शुष्यमाणामत्यर्थं कुररीमिव वाशतीम्।
करुणं बहु शोचन्तीं विलपन्तीं मुहुर्मुहुः॥३-६०-१९॥
सहसाभ्यागतां भैमीमभ्याशपरिवर्तिनीम्।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः॥३-६०-२०॥
सा ग्रस्यमाना ग्राहेण शोकेन च पराजिता।
नात्मानं शोचति तथा यथा शोचति नैषधम्॥३-६०-२१॥
हा नाथ मामिह वने ग्रस्यमानामनाथवत्।

ग्राहेणानेन विपिने किमर्थं नाभिधावसि॥३-६०-२२॥
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध।
पापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च॥३-६०-२३॥
श्रान्तस्य ते क्षुधार्तस्य परिग्लानस्य नैषध।
कः श्रमं राजशार्दूल नाशयिष्यति मानद॥३-६०-२४॥
तामकस्मान्मृगव्याधो विचरन्गहने वने।
आक्रन्दतीमुपश्रुत्य जवेनाभिससार ह॥३-६०-२५॥
तां स दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम्।
त्वरमाणो मृगव्याधः समभिक्रम्य वेगितः॥३-६०-२६॥
मुखतः पातयामास शस्त्रेण निशितेन ह।
निर्विचेष्टं भुजंगं तं विशस्य मृगजीवनः॥३-६०-२७॥
मोक्षयित्वा च तां व्याधः प्रक्षाल्य सलिलेन च।
समाश्वास्य कृताहारामथ पप्रच्छ भारत॥३-६०-२८॥
कस्य त्वं मृगशावाक्षि कथं चाभ्यागता वनम्।
कथं चेदं महत्कृच्छ्रं प्राप्तवत्यसि भामिनि॥३-६०-२९॥
दमयन्ती तथा तेन पृच्छ्यमाना विशां पते।
सर्वमेतद्यथावृत्तमाचचक्षे ऽस्य भारत॥३-६०-३०॥
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम्।
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम्॥३-६०-३१॥
अरालपक्ष्मनयनां तथा मधुरभाषिणीम्।
लक्षयित्वा मृगव्याधः कामस्य वशमेयिवान्॥३-६०-३२॥
तामथ श्लक्ष्णया वाचा लुब्धको मृदुपुर्वया।
सान्त्वयामास कामार्तस्तदबुध्यत भामिनी॥३-६०-३३॥
दमयन्ती तु तं दुष्टमुपलभ्य पतिव्रता।
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना॥३-६०-३४॥
स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः।
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव॥३-६०-३५॥
दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता।
अतीतवाक्पथे काले शशापैनं रुषा किल॥३-६०-३६॥
यथाहं नैषधादन्यं मनसापि न चिन्तये।
तथायं पततां क्षुद्रः परासुर्मृगजीवनः॥३-६०-३७॥
उक्तमात्रे तु वचने तया स मृगजीवनः।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः॥३-६०-३८॥
बृहदश्व उवाच।
सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम्॥३-६१-१॥
सिंहव्याघ्रवराहर्क्षरुरुद्वीपिनिषेवितम्।
नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितम्॥३-६१-२॥
शालवेणुधवाश्वत्थतिन्दुकेङ्गुदकिंशुकैः।
अर्जुनारिष्टसंछन्नं चन्दनैश्च सशाल्मलैः॥३-६१-३॥
जम्ब्वाम्रलोध्रखदिरशाकवेत्रसमाकुलम्।
काश्मर्यामलकप्लक्षकदम्बोदुम्बरावृतम्॥३-६१-४॥
बदरीबिल्वसंछन्नं न्यग्रोधैश्च समाकुलम्।
प्रियालतालखर्जूरहरीतकबिभीतकैः॥३-६१-५॥
नानाधातुशतैर्नद्धान्विविधानपि चाचलान्।
निकुञ्जान्पक्षिसंघुष्टान्दरीश्चाद्भुतदर्शनाः।
नदीः सरांसि वापीश्च विविधांश्च मृगद्विजान्॥३-६१-६॥
सा बहून्भीमरूपांश्च पिशाचोरगराक्षसान्।
पल्वलानि तडागानि गिरिकूटानि सर्वशः।

सरितः सागरांश्चैव ददर्शाद्भुतदर्शनान्॥३-६१-७॥
यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी।
महिषान्वराहान्गोमायूनृक्षवानरपन्नगान्॥३-६१-८॥
तेजसा यशसा स्थित्या श्रिया च परया युता।
वैदर्भी विचरत्येका नलमन्वेषती तदा॥३-६१-९॥
नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित्।
दारुणामटवीं प्राप्य भर्तृव्यसनकर्शिता॥३-६१-१०॥
विदर्भतनया राजन्विललाप सुदुःखिता।
भर्तृशोकपरीताङ्गी शिलातलसमाश्रिता॥३-६१-११॥
दमयन्त्युवाच।
सिंहोरस्क महाबाहो निषधानां जनाधिप।
क्व नु राजन्गतोऽसीह त्यक्त्वा मां निर्जने वने॥३-६१-१२॥
अश्वमेधादिभिर्वीर क्रतुभिः स्वाप्तदक्षिणैः।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे॥३-६१-१३॥
यत्त्वयोक्तं नरव्याघ्र मत्समक्षं महाद्युते।
कर्तुमर्हसि कल्याण तदृतं पार्थिवर्षभ॥३-६१-१४॥
यथोक्तं विहगैर्हंसैः समीपे तव भूमिप।
मत्सकाशे च तैरुक्तं तदवेक्षितुमर्हसि॥३-६१-१५॥
चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः।
स्वधीता मानवश्रेष्ठ सत्यमेकं किलैकतः॥३-६१-१६॥
तस्मादर्हसि शत्रुघ्न सत्यं कर्तुं नरेश्वर।
उक्तवानसि यद्वीर मत्सकाशे पुरा वचः॥३-६१-१७॥
हा वीर ननु नामाहमिष्टा किल तवानघ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे॥३-६१-१८॥
भर्त्सयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः।
अरण्यराट्क्षुधाविष्टः किं मां न त्रातुमर्हसि॥३-६१-१९॥
न मे त्वदन्या सुभगे प्रिया इत्यब्रवीस्तदा।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप॥३-६१-२०॥
उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप।
ईप्सितामीप्सितो नाथ किं मां न प्रतिभाषसे॥३-६१-२१॥
कृशां दीनां विवर्णां च मलिनां वसुधाधिप।
वस्त्रार्धप्रावृतामेकां विलपन्तीमनाथवत्॥३-६१-२२॥
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन।
न मानयसि मानार्ह रुदतीमरिकर्शन॥३-६१-२३॥
महाराज महारण्ये मामिहैकाकिनीं सतीम्।
आभाषमाणां स्वां पत्नीं किं मां न प्रतिभाषसे॥३-६१-२४॥
कुलशीलोपसंपन्नं चारुसर्वाङ्गशोभनम्।
नाद्य त्वामनुपश्यामि गिरावस्मिन्नरोत्तम।
वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते॥३-६१-२५॥
शयानमुपविष्टं वा स्थितं वा निषधाधिप।
प्रस्थितं वा नरश्रेष्ठ मम शोकविवर्धन॥३-६१-२६॥
कं नु पृच्छामि दुःखार्ता त्वदर्थे शोककर्शिता।
कच्चिद्दृष्टस्त्वयारण्ये संगत्येह नलो नृपः॥३-६१-२७॥
को नु मे कथयेदद्य वनेऽस्मिन्विष्ठितं नलम्।
अभिरूपं महात्मानं परव्यूहविनाशनम्॥३-६१-२८॥
यमन्वेषसि राजानं नलं पद्मनिभेक्षणम्।
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम्॥३-६१-२९॥
अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः।
शार्दूलोऽभिमुखः प्रैति पृच्छाम्येनमशङ्किता॥३-६१-३०॥

भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः।
विदर्भराजतनयां दमयन्तीति विद्धि माम्॥३-६१-३१॥
निषधाधिपतेर्भार्यां नलस्यामित्रघातिनः।
पतिमन्वेषतीमेकां कृपणां शोककर्शिताम्।
आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः॥३-६१-३२॥
अथ वारण्यनृपते नलं यदि न शंससि।
मामदस्व मृगश्रेष्ठ विशोकां कुरु दुःखिताम्॥३-६१-३३॥
श्रुत्वारण्ये विलपितं ममैष मृगराट्स्वयम्।
यात्येतां मृष्टसलिलामापगां सागरंगमाम्॥३-६१-३४॥
इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितैः।
विराजद्भिर्दिवस्पृग्भिर्नैकवर्णैर्मनोरमैः॥३-६१-३५॥
नानाधातुसमाकीर्णं विविधोपलभूषितम्।
अस्यारण्यस्य महतः केतुभूतमिवोच्छ्रितम्॥३-६१-३६॥
सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतम्।
पतत्रिभिर्बहुविधैः समन्तादनुनादितम्॥३-६१-३७॥
किंशुकाशोकबकुलपुंनागैरुपशोभितम्।
सरिद्भिः सविहंगाभिः शिखरैश्चोपशोभितम्।
गिरिराजमिमं तावत्पृच्छामि नृपतिं प्रति॥३-६१-३८॥
भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत।
शरण्य बहुकल्याण नमस्ते ऽस्तु महीधर॥३-६१-३९॥
प्रणमे त्वाभिगम्याहं राजपुत्रीं निबोध माम्।
राज्ञः स्नुषां राजभार्यां दमयन्तीति विश्रुताम्॥३-६१-४०॥
राजा विदर्भाधिपतिः पिता मम महारथः।
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता॥३-६१-४१॥
राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम्।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः॥३-६१-४२॥
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः।
शीलवान्सुसमाचारः पृथुश्रीर्धर्मविच्छुचिः॥३-६१-४३॥
सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः।
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम्॥३-६१-४४॥
निषधेषु महाशैल श्वशुरो मे नृपोत्तमः।
सुगृहीतनामा विख्यातो वीरसेन इति स्म ह॥३-६१-४५॥
तस्य राज्ञः सुतो वीरः श्रीमान्सत्यपराक्रमः।
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह॥३-६१-४६॥
नलो नामारिदमनः पुण्यश्लोक इति श्रुतः।
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपो ऽग्निचित्॥३-६१-४७॥
यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता।
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम्॥३-६१-४८॥
त्यक्तश्रियं भर्तृहीनामनाथां व्यसनान्विताम्।
अन्वेषमाणां भर्तारं तं वै नरवरोत्तमम्॥३-६१-४९॥
खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः।
कच्चिद्दृष्टो ऽचलश्रेष्ठ वने ऽस्मिन्दारुणो नलः॥३-६१-५०॥
गजेन्द्रविक्रमो धीमान्दीर्घबाहुरमर्षणः।
विक्रान्तः सत्यवाग्धीरो भर्ता मम महायशाः।
निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः॥३-६१-५१॥
किं मां विलपतीमेकां पर्वतश्रेष्ठ दुःखिताम्।
गिरा नाश्वासयस्यद्य स्वां सुतामिव दुःखिताम्॥३-६१-५२॥
वीर विक्रान्त धर्मज्ञ सत्यसंध महीपते।
यद्यस्यस्मिन्वने राजन्दर्शयात्मानमात्मना॥३-६१-५३॥

कदा नु स्निग्धगम्भीरां जीमूतस्वनसंनिभाम्।
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम्॥३-६१-५४॥
वैदर्भीत्येव कथितां शुभां राज्ञो महात्मनः।
आम्नायसारिणीमृद्धां मम शोकनिबर्हिणीम्॥३-६१-५५॥
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम्॥३-६१-५६॥
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना।
तापसारण्यमतुलं दिव्यकाननदर्शनम्॥३-६१-५७॥
वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम्।
नियतैः संयताहारैर्दमशौचसमन्वितैः॥३-६१-५८॥
अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च।
जितेन्द्रियैर्महाभागैः स्वर्गमार्गदिदृक्षुभिः॥३-६१-५९॥
वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः।
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम्॥३-६१-६०॥
सा दृष्ट्वैवाश्रमपदं नानामृगनिषेवितम्।
शाखामृगगणैश्चैव तापसैश्च समन्वितम्॥३-६१-६१॥
सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना।
वर्चस्विनी सुप्रतिष्ठा स्वञ्चितोद्यतगामिनी॥३-६१-६२॥
सा विवेशाश्रमपदं वीरसेनसुतप्रिया।
योषिद्रत्नं महाभागा दमयन्ती मनस्विनी॥३-६१-६३॥
साभिवाद्य तपोवृद्धान्विनयावनता स्थिता।
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा॥३-६१-६४॥
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे॥३-६१-६५॥
तानुवाच वरारोहा कच्चिद्भगवतामिह।
तपस्यग्निषु धर्मेषु मृगपक्षिषु चानघाः।
कुशलं वो महाभागाः स्वधर्मचरणेषु च॥३-६१-६६॥
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी।
ब्रूहि सर्वानवद्याङ्गि का त्वं किं च चिकीर्षसि॥३-६१-६७॥
दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह।
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः॥३-६१-६८॥
अस्यारण्यस्य महती देवता वा महीभृतः।
अस्या नु नद्याः कल्याणि वद सत्यमनिन्दिते॥३-६१-६९॥
साब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता।
न चाप्यस्य गिरेर्विप्रा न नद्या देवताप्यहम्॥३-६१-७०॥
मानुषीं मां विजानीत यूयं सर्वे तपोधनाः।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः॥३-६१-७१॥
विदर्भेषु महीपालो भीमो नाम महाद्युतिः।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः॥३-६१-७२॥
निषधाधिपतिर्धीमान्नलो नाम महायशाः।
वीरः संग्रामजिद्विद्वान्मम भर्ता विशां पतिः॥३-६१-७३॥
देवताभ्यर्चनपरो द्विजातिजनवत्सलः।
गोप्ता निषधवंशस्य महाभागो महाद्युतिः॥३-६१-७४॥
सत्यवाग्धर्मवित्प्राज्ञः सत्यसंधो ऽरिमर्दनः।
ब्रह्मण्यो दैवतपरः श्रीमान्परपुरंजयः॥३-६१-७५॥
नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनो ऽरिहा॥३-६१-७६॥
आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः॥३-६१-७७॥

स कैश्चिन्निकृतिप्रज्ञकल्याणेर्नराधमैः।
आहूय पृथिवीपालः सत्यधर्मपरायणः।
देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च॥३-६१-७८॥
तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै।
दमयन्तीति विख्यातां भर्तृदर्शनलालसाम्॥३-६१-७९॥
सा वनानि गिरींश्चैव सरांसि सरितस्तथा।
पल्वलानि च रम्याणि तथारण्यानि सर्वशः॥३-६१-८०॥
अन्वेषमाणा भर्तारं नलं रणविशारदम्।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता॥३-६१-८१॥
कच्चिद्भगवतां पुण्यं तपोवनमिदं नृपः।
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः॥३-६१-८२॥
यत्कृते ऽहमिदं विप्राः प्रपन्ना भृशदारुणम्।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम्॥३-६१-८३॥
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम्।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोचनात्॥३-६१-८४॥
को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम्।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता॥३-६१-८५॥
एवं विलपतीमेकामरण्ये भीमनन्दिनीम्।
दमयन्तीमथोचुस्ते तापसाः सत्यवादिनः॥३-६१-८६॥
उदर्कस्तव कल्याणि कल्याणो भविता शुभे।
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम्॥३-६१-८७॥
निषधानामधिपतिं नलं रिपुनिघातिनम्।
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम्॥३-६१-८८॥
विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम्।
तदेव नगरश्रेष्ठं प्रशासन्तमरिंदमम्॥३-६१-८९॥
द्विषतां भयकर्तारं सुहृदां शोकनाशनम्।
पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं नृपम्॥३-६१-९०॥
एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम्।
अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तदा॥३-६१-९१॥
सा दृष्ट्वा महदाश्चर्यं विस्मिता अभवत्तदा।
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा॥३-६१-९२॥
किं नु स्वप्नो मया दृष्टः को ऽयं विधिरिहाभवत्।
क्व नु ते तापसाः सर्वे क्व तदाश्रममण्डलम्॥३-६१-९३॥
क्व सा पुण्यजला रम्या नानाद्विजनिषेविता।
नदी ते च नगा हृद्याः फलपुष्पोपशोभिताः॥३-६१-९४॥
ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता।
भर्तृशोकपरा दीना विवर्णवदनाभवत्॥३-६१-९५॥
सा गत्वाथापरां भूमिं बाष्पसंदिग्धया गिरा।
विललापाश्रुपूर्णाक्षी दृष्ट्वाशोकतरुं ततः॥३-६१-९६॥
उपगम्य तरुश्रेष्ठमशोकं पुष्पितं तदा।
पल्लवापीडितं हृद्यं विहंगैरनुनादितम्॥३-६१-९७॥
अहो बतायमगमः श्रीमानस्मिन्वनान्तरे।
आपीडैर्बहुभिर्भाति श्रीमान्द्रमिडराडिव॥३-६१-९८॥
विशोकां कुरु मां क्षिप्रमशोक प्रियदर्शन।
वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम्॥३-६१-९९॥
नलं नामारिदमनं दमयन्त्याः प्रियं पतिम्।
निषधानामधिपतिं दृष्टवानसि मे प्रियम्॥३-६१-१००॥
एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम्।
व्यसनेनार्दितं वीरमरण्यमिदमागतम्॥३-६१-१०१॥

यथा विशोका गच्छेयमशोकनग तत्कुरु।
सत्यनामा भवाशोक मम शोकविनाशनात्॥३-६१-१०२॥
एवं साशोकवृक्षं तमार्ता त्रिः परिगम्य ह।
जगाम दारुणतरं देशं भैमी वराङ्गना॥३-६१-१०३॥
सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा।
नैकांश्च पर्वतान्रम्यान्नैकांश्च मृगपक्षिणः॥३-६१-१०४॥
कन्दरांश्च नितम्बांश्च नदांश्चाद्भुतदर्शनान्।
ददर्श सा भीमसुता पतिमन्वेषती तदा॥३-६१-१०५॥
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता।
ददर्शाथ महासार्थं हस्त्यश्वरथसंकुलम्॥३-६१-१०६॥
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम्।
सुशीततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम्॥३-६१-१०७॥
प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजिताम्।
कूर्मग्राहझषाकीर्णां पुलिनद्वीपशोभिताम्॥३-६१-१०८॥
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी।
उपसर्प्य वरारोहा जनमध्यं विवेश ह॥३-६१-१०९॥
उन्मत्तरूपा शोकार्ता तथा वस्त्रार्धसंवृता।
कृशा विवर्णा मलिना पांसुध्वस्तशिरोरुहा॥३-६१-११०॥
तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः।
के चिच्चिन्तापरास्तस्थुः केचित्तत्र विचुक्रुशुः॥३-६१-१११॥
प्रहसन्ति स्म तां केचिदभ्यसूयन्त चापरे।
चक्रुस्तस्यां दयां केचित्पप्रच्छुश्चापि भारत॥३-६१-११२॥
कासि कस्यासि कल्याणि किं वा मृगयसे वने।
त्वां दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसि मानुषी॥३-६१-११३॥
वद सत्यं वनस्यास्य पर्वतस्याथ वा दिशः।
देवता त्वं हि कल्याणि त्वां वयं शरणं गताः॥३-६१-११४॥
यक्षी वा राक्षसी वा त्वमुताहो ऽसि वराङ्गना।
सर्वथा कुरु नः स्वस्ति रक्षस्वास्माननिन्दिते॥३-६१-११५॥
यथायं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत्।
तथा विधत्स्व कल्याणि त्वां वयं शरणं गताः॥३-६१-११६॥
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा।
प्रत्युवाच ततः साध्वी भर्तृव्यसनदुःखिता।
सार्थवाहं च सार्थं च जना ये चात्र केचन॥३-६१-११७॥
यूनः स्थविरबालाश्च सार्थस्य च पुरोगमाः।
मानुषीं मां विजानीत मनुजाधिपतेः सुताम्।
नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम्॥३-६१-११८॥
विदर्भराण्मम पिता भर्ता राजा च नैषधः।
नलो नाम महाभागस्तं मार्गाम्यपराजितम्॥३-६१-११९॥
यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम्।
नलं पार्थिवशार्दूलममित्रगणसूदनम्॥३-६१-१२०॥
तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः।
सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः॥३-६१-१२१॥
अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते।
मनुष्यं नलनामानं न पश्यामि यशस्विनि॥३-६१-१२२॥
कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि।
पश्याम्यस्मिन्वने कष्टे अमनुष्यनिषेविते।
तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु॥३-६१-१२३॥
साब्रवीद्वणिजः सर्वान्सार्थवाहं च तं ततः।
क्व नु यास्यसि सार्थो ऽयमेतदाख्यातुमर्हथ॥३-६१-१२४॥

सार्थवाह उवाच।
सार्थो ऽयं चेदिराजस्य सुबाहोः सत्यवादिनः।
क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे॥३-६१-१२५॥
बृहदश्व उवाच।
सा तच्छ्रुत्वानवद्याङ्गी सार्थवाहवचस्तदा।
अगच्छत्तेन वै सार्धं भर्तृदर्शनलालसा॥३-६२-१॥
अथ काले बहुतिथे वने महति दारुणो।
तडागं सर्वतोभद्रं पद्मसौगन्धिकं महत्॥३-६२-२॥
ददृशुर्वणिजो रम्यं प्रभूतयवसेन्धनम्।
बहुमूलफलोपेतं नानापक्षिगणैर्वृतम्॥३-६२-३॥
तं दृष्ट्वा मृष्टसलिलं मनोहरसुखावहम्।
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः॥३-६२-४॥
संमते सार्थवाहस्य विविशुर्वनमुत्तमम्।
उवास सार्थः सुमहान्वेलामासाद्य पश्चिमाम्॥३-६२-५॥
अथार्धरात्रसमये निःशब्दस्तिमिते तदा।
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत्।
पानीयार्थं गिरिनदीं मदप्रस्रवणाविलाम्॥३-६२-६॥
मार्गं संरुध्य संसुप्तं पद्मिन्याः सार्थमुत्तमम्।
सुप्तं ममर्द सहसा चेष्टमानं महीतले॥३-६२-७॥
हाहारवं प्रमुञ्चन्तः सार्थिकाः शरणार्थिनः।
वनगुल्मांश्च धावन्तो निद्रान्धा महतो भयात्।
केचिद्दन्तैः करैः केचित्केचित्पद्भ्यां हता नराः॥३-६२-८॥
गोखरोष्ट्राश्वबहुलं पदातिजनसंकुलम्।
भयार्तं धावमानं तत्परस्परहतं तदा॥३-६२-९॥
घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले।
वृक्षेष्वासज्य संभग्नाः पतिता विषमेषु च।
तथा तन्निहतं सर्वं समृद्धं सार्थमण्डलम्॥३-६२-१०॥
अथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा।
वनगुल्माद्विनिष्क्रम्य शोचन्तो वैशसं कृतम्।
भ्रातरं पितरं पुत्रं सखायं च जनाधिप॥३-६२-११॥
अशोचत्तत्र वैदर्भी किं नु मे दुष्कृतं कृतम्।
यो ऽपि मे निर्जने ऽरण्ये संप्राप्तो ऽयं जनार्णवः।
हतो ऽयं हस्तियूथेन मन्दभाग्यान्ममैव तु॥३-६२-१२॥
प्राप्तव्यं सुचिरं दुःखं मया नूनमसंशयम्।
नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम्॥३-६२-१३॥
यन्नाहमद्य मृदिता हस्तियूथेन दुःखिता।
न ह्यदैवकृतं किं चिन्नराणामिह विद्यते॥३-६२-१४॥
न च मे बालभावे ऽपि किंचिद्व्यपकृतं कृतम्।
कर्मणा मनसा वाचा यदिदं दुःखमागतम्॥३-६२-१५॥
मन्ये स्वयंवरकृते लोकपालाः समागताः।
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः।
नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहम्॥३-६२-१६॥
एवमादीनि दुःखानि सा विलप्य वराङ्गना।
हतशिष्टैः सह तदा ब्राह्मणैर्वेदपारगैः।
अगच्छद्राजशार्दूल दुःखशोकपरायणा॥३-६२-१७॥
गच्छन्ती सा चिरात्कालात्पुरमासादयन्महत्।
सायाह्ने चेदिराजस्य सुबाहोः सत्यवादिनः।
वस्त्रार्धकर्तसंवीता प्रविवेश पुरोत्तमम्॥३-६२-१८॥
तां विवर्णां कृशां दीनां मुक्तकेशीममार्जनाम्।

उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः॥३-६२-१९॥
प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा।
अनुजग्मुस्ततो बाला ग्रामिपुत्राः कुतूहलात्॥३-६२-२०॥
सा तैः परिवृतागच्छत्समीपं राजवेश्मनः।
तां प्रासादगतापश्यद्राजमाता जनैर्वृताम्॥३-६२-२१॥
सा जनं वारयित्वा तं प्रासादतलमुत्तमम्।
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत॥३-६२-२२॥
एवमप्यसुखाविष्टा बिभर्षि परमं वपुः।
भासि विद्युदिवाभ्रेषु शंस मे कासि कस्य वा॥३-६२-२३॥
न हि ते मानुषं रूपं भूषणेरपि वर्जितम्।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे॥३-६२-२४॥
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत्।
मानुषीं मां विजानीहि भर्तारं समनुव्रताम्॥३-६२-२५॥
सैरन्ध्रीं जातिसंपन्नां भुजिष्यां कामवासिनीम्।
फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम्॥३-६२-२६॥
असंख्येयगुणो भर्ता मां च नित्यमनुव्रतः।
भर्तारमपि तं वीरं छायेवानपगा सदा॥३-६२-२७॥
तस्य दैवात्प्रसङ्गो ऽभूदतिमात्रं स्म देवने।
द्यूते स निर्जितश्चैव वनमेको ऽभ्युपेयिवान्॥३-६२-२८॥
तमेकवसनं वीरमुन्मत्तमिव विह्वलम्।
आश्वासयन्ती भर्तारमहमन्वगमं वनम्॥३-६२-२९॥
स कदाचिद्वने वीरः कस्मिंश्चित्कारणान्तरे।
क्षुत्परीतः सुविमनास्तदप्येकं व्यसर्जयत्॥३-६२-३०॥
तमेकवसनं नग्नमुन्मत्तं गतचेतसम्।
अनुव्रजन्ती बहुला न स्वपामि निशाः सदा॥३-६२-३१॥
ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित्।
वाससो ऽर्धं परिच्छिद्य त्यक्तवान्मामनागसम्॥३-६२-३२॥
तं मार्गमाणा भर्तारं दह्यमाना दिनक्षपाः।
न विन्दाम्यमरप्रख्यं प्रियं प्राणधनेश्वरम्॥३-६२-३३॥
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु।
राजमाताब्रवीदार्तां भैमीमार्ततरा स्वयम्॥३-६२-३४॥
वसस्व मयि कल्याणि प्रीतिर्मे त्वयि वर्तते।
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम॥३-६२-३५॥
अथ वा स्वयमागच्छेत्परिधावन्नितस्ततः।
इहैव वसती भद्रे भर्तारमुपलप्स्यसे॥३-६२-३६॥
राजमातुर्वचः श्रुत्वा दमयन्ती वचो ऽब्रवीत्।
समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि॥३-६२-३७॥
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम्।
न चाहं पुरुषानन्यान्संभाषेयं कथंचन॥३-६२-३८॥
प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान्भवेत्।
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम्॥३-६२-३९॥
यद्येवमिह कर्तव्यं वसाम्यहमसंशयम्।
अतो ऽन्यथा न मे वासो वर्तते हृदये क्वचित्॥३-६२-४०॥
तां प्रहृष्टेन मनसा राजमातेदमब्रवीत्।
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम्॥३-६२-४१॥
एवमुक्त्वा ततो भैमीं राजमाता विशां पते।
उवाचेदं दुहितरं सुनन्दां नाम भारत॥३-६२-४२॥
सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम्।
एतया सह मोदस्व निरुद्विग्नमनाः स्वयम्॥३-६२-४३॥

बृहदश्व उवाच।
उत्सृज्य दमयन्तीं तु नलो राजा विशां पते।
ददर्श दावं दह्यन्तं महान्तं गहने वने॥३-६३-१॥
तत्र शुश्राव मध्ये ऽग्नौ शब्दं भूतस्य कस्यचित्।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत्॥३-६३-२॥
मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम्।
ददर्श नागराजानं शयानं कुण्डलीकृतम्॥३-६३-३॥
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा।
उवाच विद्धि मां राजन्नागं कर्कोटकं नृप॥३-६३-४॥
मया प्रलब्धो ब्रह्मर्षिरनागाः सुमहातपाः।
तेन मन्युपरीतेन शप्तो ऽस्मि मनुजाधिप॥३-६३-५॥
तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम्।
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान्॥३-६३-६॥
सखा च ते भविष्यामि मत्समो नास्ति पन्नगः।
लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम्॥३-६३-७॥
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः।
तं गृहीत्वा नलः प्रायादुद्देशं दाववर्जितम्॥३-६३-८॥
आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटको ऽब्रवीत्॥३-६३-९॥
पदानि गणयन्गच्छ स्वानि नैषध कानिचित्।
तत्र ते ऽहं महाराज श्रेयो धास्यामि यत्परम्॥३-६३-१०॥
ततः संख्यातुमारब्धमदशद्दशमे पदे।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत॥३-६३-११॥
स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः।
स्वरूपधारिणं नागं ददर्श च महीपतिः॥३-६३-१२॥
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत्।
मया ते ऽन्तर्हितं रूपं न त्वा विद्युर्जना इति॥३-६३-१३॥
यत्कृते चासि विकृतो दुःखेन महता नल।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति॥३-६३-१४॥
विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति।
तावत्त्वयि महाराज दुःखं वै स निवत्स्यति॥३-६३-१५॥
अनागा येन निकृतस्त्वमनर्हो जनाधिप।
क्रोधादसूययित्वा तं रक्षा मे भवतः कृता॥३-६३-१६॥
न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतो ऽपि वा।
ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप॥३-६३-१७॥
राजन्विषनिमित्ता च न ते पीडा भविष्यति।
संग्रामेषु च राजेन्द्र शश्वज्जयमवाप्स्यसि॥३-६३-१८॥
गच्छ राजन्नितः सूतो बाहुको ऽहमिति ब्रुवन्।
समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम्।
अयोध्यां नगरीं रम्यामद्यैव निषधेश्वर॥३-६३-१९॥
स ते ऽक्षहृदयं दाता राजाश्वहृदयेन वै।
इक्ष्वाकुकुलजः श्रीमान्मित्रं चैव भविष्यति॥३-६३-२०॥
भविष्यसि यदाक्षज्ञः श्रेयसा योक्ष्यसे तदा।
समेष्यसि च दारैस्त्वं मा स्म शोके मनः कृथाः।
राज्येन तनयाभ्यां च सत्यमेतद्ब्रवीमि ते॥३-६३-२१॥
स्वरूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप।
संस्मर्तव्यस्तदा ते ऽहं वासश्चेदं निवासयेः॥३-६३-२२॥
अनेन वाससाच्छन्नः स्वरूपं प्रतिपत्स्यसे।
इत्युक्त्वा प्रददावस्मै दिव्यं वासोयुगं तदा॥३-६३-२३॥

एवं नलं समादिश्य वासो दत्त्वा च कौरव।
नागराजस्ततो राजंस्तत्रैवान्तरधीयत॥३-६३-२४॥
बृहदश्व उवाच।
तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः।
ऋतुपर्णस्य नगरं प्राविशद्दशमे ऽहनि॥३-६४-१॥
स राजानमुपातिष्ठद्बाहुको ऽहमिति ब्रुवन्।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः॥३-६४-२॥
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च।
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः॥३-६४-३॥
यानि शिल्पानि लोके ऽस्मिन्यच्चाप्यन्यत्सुदुष्करम्।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम्॥३-६४-४॥
ऋतुपर्ण उवाच।
वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि।
शीघ्रयाने सदा बुद्धिर्धीयते मे विशेषतः॥३-६४-५॥
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम।
भवेयुरश्वाध्यक्षो ऽसि वेतनं ते शतं शताः॥३-६४-६॥
त्वामुपस्थास्यतश्चेमौ नित्यं वार्ष्णेयजीवलौ।
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक॥३-६४-७॥
बृहदश्व उवाच।
एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः।
ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः॥३-६४-८॥
स तत्र निवसन्राजा वैदर्भीमनुचिन्तयन्।
सायं सायं सदा चेमं श्लोकमेकं जगाद ह॥३-६४-९॥
क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी।
स्मरन्ती तस्य मन्दस्य कं वा साद्योपतिष्ठति॥३-६४-१०॥
एवं ब्रुवन्तं राजानं निशायां जीवलो ऽब्रवीत्।
कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक॥३-६४-११॥
तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित्।
आसीद्बहुमता नारी तस्या दृढतरं च सः॥३-६४-१२॥
स वै केनचिदर्थेन तया मन्दो व्ययुज्यत।
विप्रयुक्तश्च मन्दात्मा भ्रमत्यसुखपीडितः॥३-६४-१३॥
दह्यमानः स शोकेन दिवारात्रमतन्द्रितः।
निशाकाले स्मरंस्तस्याः श्लोकमेकं स्म गायति॥३-६४-१४॥
स वै भ्रमन्महीं सर्वां क्वचिदासाद्य किंचन।
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन्॥३-६४-१५॥
सा तु तं पुरुषं नारी कृच्छ्रे ऽप्यनुगता वने।
त्यक्ता तेनाल्पपुण्येन दुष्करं यदि जीवति॥३-६४-१६॥
एका बालानभिज्ञा च मार्गाणामतथोचिता।
क्षुत्पिपासापरीता च दुष्करं यदि जीवति॥३-६४-१७॥
श्वापदाचरिते नित्यं वने महति दारुणे।
त्यक्ता तेनाल्पपुण्येन मन्दप्रज्ञेन मारिष॥३-६४-१८॥
इत्येवं नैषधो राजा दमयन्तीमनुस्मरन्।
अज्ञातवासमवसद्राज्ञस्तस्य निवेशने॥३-६४-१९॥
बृहदश्व उवाच।
हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते।
द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया॥३-६५-१॥
संदिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम्।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम्॥३-६५-२॥
अस्मिन्कर्मणि निष्पन्ने विज्ञाते निषधाधिपे।

गवां सहस्रं दास्यामि यो वस्तावानयिष्यति।
अग्रहारं च दास्यामि ग्रामं नगरसंमितम्॥३-६५-३॥
न चेच्छक्याविहानेतुं दमयन्ती नलो ऽपि वा।
ज्ञातमात्रे ऽपि दास्यामि गवां दशशतं धनम्॥३-६५-४॥
इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतोदिशम्।
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया॥३-६५-५॥
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः।
विचिन्वानो ऽथ वैदर्भीमपश्यद्राजवेश्मनि।
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम्॥३-६५-६॥
मन्दप्रख्यायमानेन रूपेणाप्रतिमेन ताम्।
पिनद्धां धूमजालेन प्रभामिव विभावसोः॥३-६५-७॥
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम्।
तर्कयामास भैमीति कारणेरुपपादयन्॥३-६५-८॥
सुदेव उवाच।
यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना।
कृतार्थो ऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियम्॥३-६५-९॥
पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम्।
कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः॥३-६५-१०॥
चारुपद्मपलाशाक्षीं मन्मथस्य रतीमिव।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव॥३-६५-११॥
विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम्।
मलपङ्कानुलिप्ताङ्गीं मृणालीमिव तां भृशम्॥३-६५-१२॥
पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम्।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव॥३-६५-१३॥
विध्वस्तपर्णकमलां वित्रासितविहंगमाम्।
हस्तिहस्तपरिक्लिष्टां व्याकुलामिव पद्मिनीम्॥३-६५-१४॥
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम्।
दह्यमानामिवोष्णोन मृणालीमचिरोद्धृताम्॥३-६५-१५॥
रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम्।
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम्॥३-६५-१६॥
कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च।
देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया॥३-६५-१७॥
भर्ता नाम परं नार्या भूषणं भूषणेर्विना।
एषा विरहिता तेन शोभनापि न शोभते॥३-६५-१८॥
दुष्करं कुरुते ऽत्यर्थं हीनो यदनया नलः।
धारयत्यात्मनो देहं न शोकेनावसीदति॥३-६५-१९॥
इमामसितकेशान्तां शतपत्रायतेक्षणाम्।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः॥३-६५-२०॥
कदा नु खलु दुःखस्य पारं यास्यति वै शुभा।
भर्तुः समागमात्साध्वी रोहिणी शशिनो यथा॥३-६५-२१॥
अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव मेदिनीम्॥३-६५-२२॥
तुल्यशीलवयोयुक्तां तुल्याभिजनसंयुताम्।
नैषधो ऽर्हति वैदर्भीं तं चेयमसितेक्षणा॥३-६५-२३॥
युक्तं तस्याप्रमेयस्य वीर्यसत्त्ववतो मया।
समाश्वासयितुं भार्यां पतिदर्शनलालसाम्॥३-६५-२४॥
अयमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम्।
अदृष्टपूर्वां दुःखस्य दुःखार्तां ध्यानतत्पराम्॥३-६५-२५॥
बृहदश्व उवाच।

एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम्।
उपगम्य ततो भैमीं सुदेवो ब्राह्मणो ऽब्रवीत्॥३-६५-२६॥
अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः॥३-६५-२७॥
कुशली ते पिता राज्ञि जनित्री भ्रातरश्च ते।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च ते।
त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते॥३-६५-२८॥
अभिज्ञाय सुदेवं तु दमयन्ती युधिष्ठिर।
पर्यपृच्छत्ततः सर्वान्क्रमेण सुहृदः स्वकान्॥३-६५-२९॥
रुरोद च भृशं राजन्वैदर्भी शोककर्शिता।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम्॥३-६५-३०॥
ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्शिताम्।
सुदेवेन सहैकान्ते कथयन्तीं च भारत॥३-६५-३१॥
जनित्र्यै प्रेषयामास सैरन्ध्री रुदते भृशम्।
ब्राह्मणेन समागम्य तां वेद यदि मन्यसे॥३-६५-३२॥
अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत्॥३-६५-३३॥
ततः सुदेवमानाय्य राजमाता विशां पते।
पप्रच्छ भार्या कस्येयं सुता वा कस्य भामिनी॥३-६५-३४॥
कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना।
त्वया च विदिता विप्र कथमेवंगता सती॥३-६५-३५॥
एतदिच्छाम्यहं त्वत्तो ज्ञातुं सर्वमशेषतः।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम्॥३-६५-३६॥
एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम्॥३-६५-३७॥
सुदेव उवाच।
विदर्भराजो धर्मात्मा भीमो भीमपराक्रमः।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता॥३-६६-१॥
राजा तु नैषधो नाम वीरसेनसुतो नलः।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः॥३-६६-२॥
स वै द्यूते जितो भ्रात्रा हृतराज्यो महीपतिः।
दमयन्त्या गतः सार्धं न प्रज्ञायत कर्हिचित्॥३-६६-३॥
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम्।
सेयमासादिता बाला तव पुत्रनिवेशने॥३-६६-४॥
अस्या रूपेण सदृशी मानुषी नेह विद्यते।
अस्याश्चैव भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः।
श्यामायाः पद्मसंकाशो लक्षितो ऽन्तर्हितो मया॥३-६६-५॥
मलेन संवृतो ह्यस्यास्तन्वभ्रेणेव चन्द्रमाः।
चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः॥३-६६-६॥
प्रतिपत्कलुषेवेन्दोर्लेखा नाति विराजते।
न चास्या नश्यते रूपं वपुर्मलसमाचितम्।
असंस्कृतमपि व्यक्तं भाति काञ्चनसंनिभम्॥३-६६-७॥
अनेन वपुषा बाला पिप्लुनानेन चैव ह।
लक्षितेयं मया देवी पिहितो ऽग्निरिवोष्मणा॥३-६६-८॥
बृहदश्व उवाच।
तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशां पते।
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम्॥३-६६-९॥
स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत।
दमयन्त्यास्तदा व्यभ्रे नभसीव निशाकरः॥३-६६-१०॥

पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत।
रुदन्त्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः।
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत्॥३-६६-११॥
भगिन्या दुहिता मे ऽसि पिप्लुनानेन सूचिता।
अहं च तव माता च राजन्यस्य महात्मनः।
सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने॥३-६६-१२॥
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः।
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे॥३-६६-१३॥
यथैव ते पितुर्गेहं तथेदमपि भामिनि।
यथैव हि ममैश्वर्यं दमयन्ति तथा तव॥३-६६-१४॥
तां प्रहृष्टेन मनसा दमयन्ती विशां पते।
अभिवाद्य मातुर्भगिनीमिदं वचनमब्रवीत्॥३-६६-१५॥
अज्ञायमानापि सती सुखमस्म्युषितेह वै।
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया॥३-६६-१६॥
सुखात्सुखतरो वासो भविष्यति न संशयः।
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि॥३-६६-१७॥
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ।
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ॥३-६६-१८॥
यदि चापि प्रियं किं चिन्मयि कर्तुमिहेच्छसि।
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश॥३-६६-१९॥
बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप।
गुप्तां बलेन महता पुत्रस्यानुमते ततः॥३-६६-२०॥
प्रस्थापयद्राजमाता श्रीमता नरवाहिना।
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम्॥३-६६-२१॥
ततः सा नचिरादेव विदर्भानगमच्छुभा।
तां तु बन्धुजनः सर्वः प्रहृष्टः प्रत्यपूजयत्॥३-६६-२२॥
सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ।
मातरं पितरं चैव सर्वं चैव सखीजनम्॥३-६६-२३॥
देवताः पूजयामास ब्राह्मणांश्च यशस्विनी।
विधिना परेण कल्याणी दमयन्ती विशां पते॥३-६६-२४॥
अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च॥३-६६-२५॥
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भामिनी।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत्॥३-६६-२६॥
दमयन्त्युवाच।
मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते।
नरवीरस्य वै तस्य नलस्यानयने यत॥३-६७-१॥
बृहदश्व उवाच।
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता।
बाष्पेण पिहिता राजन्नोत्तरं किंचिदब्रवीत्॥३-६७-२॥
तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह॥३-६७-३॥
ततो भीमं महाराज भार्या वचनमब्रवीत्।
दमयन्ती तव सुता भर्तारमनुशोचति॥३-६७-४॥
अपकृष्य च लज्जां मां स्वयमुक्तवती नृप।
प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य दर्शने॥३-६७-५॥
तया प्रचोदितो राजा ब्राह्मणान्वशवर्तिनः।
प्रास्थापयद्दिशः सर्वा यतध्वं नलदर्शने॥३-६७-६॥
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणर्षभाः।

दमयन्तीमथो दृष्ट्वा प्रस्थिताः स्मेत्यथाब्रुवन्॥३-६७-७॥
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः।
ब्रुवध्वं जनसंसत्सु तत्र तत्र पुनः पुनः॥३-६७-८॥
क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय॥३-६७-९॥
सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता॥३-६७-१०॥
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव।
प्रसादं कुरु वै वीर प्रतिवाक्यं ददस्व च॥३-६७-११॥
एतदन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि।
वायुना धूयमानो हि वनं दहति पावकः॥३-६७-१२॥
भर्तव्या रक्षणीया च पत्नी हि पतिना सदा।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव॥३-६७-१३॥
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशश्च त्वं सदा।
संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात्॥३-६७-१४॥
स कुरुष्व महेष्वास दयां मयि नरर्षभ।
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतम्॥३-६७-१५॥
एवं ब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन।
स नरः सर्वथा ज्ञेयः कश्चासौ क्व च वर्तते॥३-६७-१६॥
यच्च वो वचनं श्रुत्वा ब्रूयात्प्रतिवचो नरः।
तदादाय वचः क्षिप्रं ममावेद्यं द्विजोत्तमाः॥३-६७-१७॥
यथा च वो न जानीयाच्चरतो भीमशासनात्।
पुनरागमनं चैव तथा कार्यमतन्द्रितैः॥३-६७-१८॥
यदि वासौ समृद्धः स्याद्यदि वाप्यधनो भवेत्।
यदि वाप्यर्थकामः स्याज्ज्ञेयमस्य चिकीर्षितम्॥३-६७-१९॥
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतोदिशम्।
नलं मृगयितुं राजंस्तथा व्यसनिनं तदा॥३-६७-२०॥
ते पुराणि सराष्ट्राणि ग्रामान्घोषांस्तथाश्रमान्।
अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः॥३-६७-२१॥
तच्च वाक्यं तथा सर्वे तत्र तत्र विशां पते।
श्रावयां चक्रिरे विप्रा दमयन्त्या यथेरितम्॥३-६७-२२॥
बृहदश्व उवाच।
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत्॥३-६८-१॥
नैषधं मृगयानेन दमयन्ति दिवानिशम्।
अयोध्यां नगरीं गत्वा भाङ्गस्वरिरुपस्थितः॥३-६८-२॥
श्रावितश्च मया वाक्यं त्वदीयं स महाजने।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि॥३-६८-३॥
तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः।
न च पारिषदः कश्चिद्भाष्यमाणो मयासकृत्॥३-६८-४॥
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत्।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः॥३-६८-५॥
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः।
शीघ्रयाने सुकुशलो मृष्टकर्ता च भोजने॥३-६८-६॥
स विनिःश्वस्य बहुशो रुदित्वा च मुहुर्मुहुः।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत॥३-६८-७॥
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः।
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन॥३-६८-८॥

विषमस्थेन मूढेन परिभ्रष्टसुखेन च।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति॥३-६८-९॥
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति॥३-६८-१०॥
सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम्।
भ्रष्टराज्यं श्रिया हीनं श्यामा न क्रोद्धुमर्हति॥३-६८-११॥
तस्य तद्वचनं श्रुत्वा त्वरितो ऽहमिहागतः।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय॥३-६८-१२॥
एतच्छ्रुत्वाश्रुपूर्णाक्षी पर्णादस्य विशां पते।
दमयन्ती रहो ऽभ्येत्य मातरं प्रत्यभाषत॥३-६८-१३॥
अयमर्थो न संवेद्यो भीमे मातः कथंचन।
त्वत्संनिधौ समादेक्ष्ये सुदेवं द्विजसत्तमम्॥३-६८-१४॥
यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम्।
तथा त्वया प्रयत्तव्यं मम चेत्प्रियमिच्छसि॥३-६८-१५॥
यथा चाहं समानीता सुदेवेनाशु बान्धवान्।
तेनैव मङ्गलेनाशु सुदेवो यातु माचिरम्।
समानेतुं नलं मातरयोध्यां नगरीमितः॥३-६८-१६॥
विश्रान्तं च ततः पश्चात्पर्णादं द्विजसत्तमम्।
अर्चयामास वैदर्भी धनेनातीव भामिनी॥३-६८-१७॥
नले चेहागते विप्र भूयो दास्यामि ते वसु।
त्वया हि मे बहु कृतं यथा नान्यः करिष्यति।
यद्भर्त्राहं समेष्यामि शीघ्रमेव द्विजोत्तम॥३-६८-१८॥
एवमुक्तो ऽर्चयित्वा तामाशीर्वादैः सुमङ्गलैः।
गृहानुपययौ चापि कृतार्थः स महामनाः॥३-६८-१९॥
ततश्चानाय्य तं विप्रं दमयन्ती युधिष्ठिर।
अब्रवीत्संनिधौ मातुर्दुःखशोकसमन्विता॥३-६८-२०॥
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम्।
ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षती।
आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम्॥३-६८-२१॥
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः।
यथा च गणितः कालः श्वोभूते स भविष्यति॥३-६८-२२॥
यदि संभावनीयं ते गच्छ शीघ्रमरिंदम।
सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति।
न हि स ज्ञायते वीरो नलो जीवन्मृतो ऽपि वा॥३-६८-२३॥
एवं तया यथोक्तं वै गत्वा राजानमब्रवीत्।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा॥३-६८-२४॥
बृहदश्व उवाच।
श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः।
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत॥३-६९-१॥
विदर्भान्यातुमिच्छामि दमदन्त्याः स्वयंवरम्।
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक॥३-६९-२॥
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः॥३-६९-३॥
दमयन्ती भवेदेतत्कुर्याद्दुःखेन मोहिता।
अस्मदर्थे भवेद्वायमुपायश्चिन्तितो महान्॥३-६९-४॥
नृशंसं बत वैदर्भी कर्तुकामा तपस्विनी।
मया क्षुद्रेण निकृता पापेनाकृतबुद्धिना॥३-६९-५॥
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः।
स्यादेवमपि कुर्यात्सा विवशा गतसौहृदा।

मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा॥३-६९-६॥
न चैवं कर्हिचित्कुर्यात्सापत्या च विशेषतः।
यदत्र तथ्यं पथ्यं च गत्वा वेत्स्यामि निश्चयम्।
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम्॥३-६९-७॥
इति निश्चित्य मनसा बाहुको दीनमानसः।
कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम्॥३-६९-८॥
प्रतिजानामि ते सत्यं गमिष्यसि नराधिप।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप॥३-६९-९॥
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः।
अश्वशालामुपागम्य भाङ्गस्वरिनृपाज्ञया॥३-६९-१०॥
स त्वर्यमाणो बहुश ऋतुपर्णोन बाहुकः।
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान्॥३-६९-११॥
तेजोबलसमायुक्तान्कुलशीलसमन्वितान्।
वर्जितांल्लक्षणेर्हीनैः पृथुप्रोथान्महाहनून्।
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः॥३-६९-१२॥
दृष्ट्वा तानब्रवीद्राजा किंचित्कोपसमन्वितः।
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या हि ते वयम्॥३-६९-१३॥
कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम।
महानध्वा च तुरगैर्गन्तव्यः कथमीदृशैः॥३-६९-१४॥
बाहुक उवाच।
एते हया गमिष्यन्ति विदर्भान्नात्र संशयः।
अथान्यान्मन्यसे राजन्ब्रूहि कान्योजयामि ते॥३-६९-१५॥
ऋतुपर्ण उवाच।
त्वमेव हयतत्त्वज्ञः कुशलश्चासि बाहुक।
यान्मन्यसे समर्थास्त्वं क्षिप्रं तानेव योजय॥३-६९-१६॥
बृहदश्व उवाच।
ततः सदश्वांश्चतुरः कुलशीलसमन्वितान्।
योजयामास कुशलो जवयुक्तान्रथे नरः॥३-६९-१७॥
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः।
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः॥३-६९-१८॥
ततो नरवरः श्रीमान्नलो राजा विशां पते।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान्॥३-६९-१९॥
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम्॥३-६९-२०॥
ते चोद्यमाना विधिना बाहुकेन हयोत्तमाः।
समुत्पेतुरिवाकाशं रथिनं मोहयन्निव॥३-६९-२१॥
तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः।
अयोध्याधिपतिर्धीमान्विस्मयं परमं ययौ॥३-६९-२२॥
रथघोषं तु तं श्रुत्वा हयसंग्रहणं च तत्।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम्॥३-६९-२३॥
किं नु स्यान्मातलिरयं देवराजस्य सारथिः।
तथा हि लक्षणं वीरे बाहुके दृश्यते महत्॥३-६९-२४॥
शालिहोत्रो ऽथ किं नु स्याद्धयानां कुलतत्त्ववित्।
मानुषं समनुप्राप्तो वपुः परमशोभनम्॥३-६९-२५॥
उताहो स्विद्भवेद्राजा नलः परपुरंजयः।
सो ऽयं नृपतिरायात इत्येवं समचिन्तयत्॥३-६९-२६॥
अथ वा यां नलो वेद विद्यां तामेव बाहुकः।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च॥३-६९-२७॥
अपि चेदं वयस्तुल्यमस्य मन्ये नलस्य च।

नायं नलो महावीर्यस्तद्विद्यस्तु भविष्यति॥३-६९-२८॥
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम्।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च विरूपणेः॥३-६९-२९॥
भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति।
प्रमाणात्परिहीनस्तु भवेदिति हि मे मतिः॥३-६९-३०॥
वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः।
नलं सर्वगुणेर्युक्तं मन्ये बाहुकमन्ततः॥३-६९-३१॥
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत्।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः॥३-६९-३२॥
ऋतुपर्णस्तु राजेन्द्र बाहुकस्य हयज्ञताम्।
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः॥३-६९-३३॥
बलं वीर्यं तथोत्साहं हयसंग्रहणं च तत्।
परं यत्नं च संप्रेक्ष्य परां मुदमवाप ह॥३-६९-३४॥
बृहदश्व उवाच।
स नदीः पर्वतांश्चैव वनानि च सरांसि च।
अचिरेणातिचक्राम खेचरः खे चरन्निव॥३-७०-१॥
तथा प्रयाते तु रथे तदा भाङ्गस्वरिर्नृपः।
उत्तरीयमथापश्यद्भ्रष्टं परपुरंजयः॥३-७०-२॥
ततः स त्वरमाणस्तु पटे निपतिते तदा।
ग्रहीष्यामीति तं राजा नलमाह महामनाः॥३-७०-३॥
निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान्।
वार्ष्णेयो यावदेतं मे पटमानयतामिति॥३-७०-४॥
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव।
योजनं समतिक्रान्तो न स शक्यस्त्वया पुनः॥३-७०-५॥
एवमुक्ते नलेनाथ तदा भाङ्गस्वरिर्नृपः।
आससाद वने राजन्फलवन्तं बिभीतकम्॥३-७०-६॥
तं दृष्ट्वा बाहुकं राजा त्वरमाणो ऽभ्यभाषत।
ममापि सूत पश्य त्वं संख्याने परमं बलम्॥३-७०-७॥
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन।
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित्॥३-७०-८॥
वृक्षे ऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक।
पतितानि च यान्यत्र तत्रैकमधिकं शतम्।
एकपत्राधिकं पत्रं फलमेकं च बाहुक॥३-७०-९॥
पञ्च कोट्यो ऽथ पत्राणां द्वयोरपि च शाखयोः।
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः।
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च॥३-७०-१०॥
ततो रथादवप्लुत्य राजानं बाहुको ऽब्रवीत्।
परोक्षमिव मे राजन्कत्थसे शत्रुकर्शन॥३-७०-११॥
अथ ते गणिते राजन्विद्यते न परोक्षता।
प्रत्यक्षं ते महाराज गणयिष्ये बिभीतकम्॥३-७०-१२॥
अहं हि नाभिजानामि भवेदेवं न वेति च।
संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप।
मुहूर्तमिव वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम्॥३-७०-१३॥
तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम्।
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः॥३-७०-१४॥
प्रतीक्षस्व मुहूर्तं त्वमथ वा त्वरते भवान्।
एष याति शिवः पन्था याहि वार्ष्णेयसारथिः॥३-७०-१५॥
अब्रवीदृतुपर्णस्तं सान्त्वयन्कुरुनन्दन।
त्वमेव यन्ता नान्यो ऽस्ति पृथिव्यामपि बाहुक॥३-७०-१६॥

त्वत्कृते यातुमिच्छामि विदर्भान्हयकोविद।
शरणं त्वां प्रपन्नो ऽस्मि न विघ्नं कर्तुमर्हसि॥३-७०-१७॥
कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक।
विदर्भान्यदि यात्वाद्य सूर्यं दर्शयितासि मे॥३-७०-१८॥
अथाब्रवीद्बाहुकस्तं संख्यायेमं बिभीतकम्।
ततो विदर्भान्यास्यामि कुरुष्वेदं वचो मम॥३-७०-१९॥
अकाम इव तं राजा गणयस्वेत्युवाच ह।
सो ऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम्॥३-७०-२०॥
ततः स विस्मयाविष्टो राजानमिदमब्रवीत्।
गणयित्वा यथोक्तानि तावन्त्येव फलानि च॥३-७०-२१॥
अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम्।
श्रोतुमिच्छामि तां विद्यां यथैतज्ज्ञायते नृप॥३-७०-२२॥
तमुवाच ततो राजा त्वरितो गमने तदा।
विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम्॥३-७०-२३॥
बाहुकस्तमुवाचाथ देहि विद्यामिमां मम।
मत्तो ऽपि चाश्वहृदयं गृहाण पुरुषर्षभ॥३-७०-२४॥
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात्।
हयज्ञानस्य लोभाच्च तथेत्येवाब्रवीद्वचः॥३-७०-२५॥
यथेष्टं त्वं गृहाणेदमक्षाणां हृदयं परम्।
निक्षेपो मे ऽश्वहृदयं त्वयि तिष्ठतु बाहुक।
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै॥३-७०-२६॥
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन्॥३-७०-२७॥
कलेस्तस्य तदार्तस्य शापाग्निः स विनिःसृतः।
स तेन कर्शितो राजा दीर्घकालमनात्मवान्॥३-७०-२८॥
ततो विषविमुक्तात्मा स्वरूपमकरोत्कलिः।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः॥३-७०-२९॥
तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः।
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम्॥३-७०-३०॥
इन्द्रसेनस्य जननी कुपिता माशपत्पुरा।
यदा त्वया परित्यक्ता ततो ऽहं भृशपीडितः॥३-७०-३१॥
अवसं त्वयि राजेन्द्र सुदुःखमपराजित।
विषेण नागराजस्य दह्यमानो दिवानिशम्॥३-७०-३२॥
ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः।
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति॥३-७०-३३॥
एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः।
ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकम्।
कलिस्त्वन्येन नादृश्यत्कथयन्नैषधेन वै॥३-७०-३४॥
ततो गतज्वरो राजा नैषधः परवीरहा।
संप्रनष्टे कलौ राजन्संख्यायाथ फलान्युत॥३-७०-३५॥
मुदा परमया युक्तस्तेजसा च परेण ह।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः।
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात्॥३-७०-३६॥
हयोत्तमानुत्पततो द्विजानिव पुनः पुनः।
नलः संचोदयामास प्रहृष्टेनान्तरात्मना॥३-७०-३७॥
विदर्भाभिमुखो राजा प्रययौ स महामनाः।
नले तु समतिक्रान्ते कलिरप्यगमद्गृहान्॥३-७०-३८॥
ततो गतज्वरो राजा नलो ऽभूत्पृथिवीपते।
विमुक्तः कलिना राजन्रूपमात्रवियोजितः॥३-७०-३९॥

बृहदश्व उवाच।
ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम्।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन्॥३-७१-१॥
स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम्।
नादयन्रथघोषेण सर्वाः सोपदिशो दश॥३-७१-२॥
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः।
श्रुत्वा च समहृष्यन्त पुरेव नलसंनिधौ॥३-७१-३॥
दमयन्ती च शुश्राव रथघोषं नलस्य तम्।
यथा मेघस्य नदतो गम्भीरं जलदागमे॥३-७१-४॥
नलेन संगृहीतेषु पुरेव नलवाजिषु।
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः॥३-७१-५॥
प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः।
हयाश्च शुश्रुवुस्तत्र रथघोषं महीपतेः॥३-७१-६॥
ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा।
प्रणेदुरुन्मुखा राजन्मेघोदयमिवेक्ष्य ह॥३-७१-७॥
दमयन्त्युवाच।
यथासौ रथनिर्घोषः पूरयन्निव मेदिनीम्।
मम ह्लादयते चेतो नल एष महीपतिः॥३-७१-८॥
अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि।
असंख्येयगुणं वीरं विनशिष्याम्यसंशयम्॥३-७१-९॥
यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम्।
प्रविशामि सुखस्पर्शं विनशिष्याम्यसंशयम्॥३-७१-१०॥
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः।
अद्य चामीकरप्रख्यो विनशिष्याम्यसंशयम्॥३-७१-११॥
यदि मां सिंहविक्रान्तो मत्तवारणवारणः।
नाभिगच्छति राजेन्द्रो विनशिष्याम्यसंशयम्॥३-७१-१२॥
न स्मराम्यनृतं किंचिन्न स्मराम्यनुपाकृतम्।
न च पर्युषितं वाक्यं स्वैरेष्वपि महात्मनः॥३-७१-१३॥
प्रभुः क्षमावान्वीरश्च मृदुर्दान्तो जितेन्द्रियः।
रहो ऽनीचानुवर्ती च क्लीबवन्मम नैषधः॥३-७१-१४॥
गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम्।
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम्॥३-७१-१५॥
बृहदश्व उवाच।
एवं विलपमाना सा नष्टसंज्ञेव भारत।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया॥३-७१-१६॥
ततो मध्यमकक्षायां ददर्श रथमास्थितम्।
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम्॥३-७१-१७॥
ततो ऽवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात्।
हयांस्तानवमुच्याथ स्थापयामासतू रथम्॥३-७१-१८॥
सो ऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः।
उपतस्थे महाराज भीमं भीमपराक्रमम्॥३-७१-१९॥
तं भीमः प्रतिजग्राह पूजया परया ततः।
अकस्मात्सहसा प्राप्तं स्त्रीमन्त्रं न स्म विन्दति॥३-७१-२०॥
किं कार्यं स्वागतं ते ऽस्तु राज्ञा पृष्टश्च भारत।
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम्॥३-७१-२१॥
ऋतुपर्णो ऽपि राजा स धीमान्सत्यपराक्रमः।
राजानं राजपुत्रं वा न स्म पश्यति कंचन।
नैव स्वयंवरकथां न च विप्रसमागमम्॥३-७१-२२॥
ततो विगणयन्राजा मनसा कोसलाधिपः।

आगतो ऽस्मीत्युवाचैनं भवन्तमभिवादकः॥३-७१-२३॥
राजापि च स्मयन्भीमो मनसाभिविचिन्तयत्।
अधिकं योजनशतं तस्यागमनकारणम्॥३-७१-२४॥
ग्रामान्बहूनतिक्रम्य नाध्यगच्छद्यथातथम्।
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम्॥३-७१-२५॥
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत्।
विश्राम्यतामिति वदन्क्लान्तो ऽसीति पुनः पुनः॥३-७१-२६॥
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः।
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत्॥३-७१-२७॥
ऋतुपर्णो गते राजन्वार्ष्णेयसहिते नृपे।
बाहुको रथमास्थाय रथशालामुपागमत्॥३-७१-२८॥
स मोचयित्वा तानश्वान्परिचार्य च शास्त्रतः।
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत्॥३-७१-२९॥
दमयन्ती तु शोकार्ता दृष्ट्वा भाङ्गस्वरिं नृपम्।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम्॥३-७१-३०॥
चिन्तयामास वैदर्भी कस्यैष रथनिस्वनः।
नलस्येव महानासीन्न च पश्यामि नैषधम्॥३-७१-३१॥
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता।
तेनास्य रथनिर्घोषो नलस्येव महानभूत्॥३-७१-३२॥
आहो स्विदृतुपर्णो ऽपि यथा राजा नलस्तथा।
ततो ऽयं रथनिर्घोषो नैषधस्येव लक्ष्यते॥३-७१-३३॥
एवं वितर्कयित्वा तु दमयन्ती विशां पते।
दूतीं प्रस्थापयामास नैषधान्वेषणो नृप॥३-७१-३४॥
दमयन्त्युवाच।
गच्छ केशिनि जानीहि क एष रथवाहकः।
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः॥३-७२-१॥
अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता।
पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते॥३-७२-२॥
अत्र मे महती शङ्का भवेदेष नलो नृपः।
तथा च मे मनस्तुष्टिर्हृदयस्य च निर्वृतिः॥३-७२-३॥
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा।
प्रतिवाक्यं च सुश्रोणि बुध्येथास्त्वमनिन्दिते॥३-७२-४॥
बृहदश्व उवाच।
एवं समाहिता गत्वा दूती बाहुकमब्रवीत्।
दमयन्त्यपि कल्याणी प्रासादस्थान्ववैक्षत॥३-७२-५॥
केशिन्युवाच।
स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम्।
दमयन्त्या वचः साधु निबोध पुरुषर्षभ॥३-७२-६॥
कदा वै प्रस्थिता यूयं किमर्थमिह चागताः।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति॥३-७२-७॥
बाहुक उवाच।
श्रुतः स्वयंवरो राज्ञा कौसल्येन यशस्विना।
द्वितीयो दमयन्त्या वै श्वोभूत इति भामिनि॥३-७२-८॥
श्रुत्वा तं प्रस्थितो राजा शतयोजनयायिभिः।
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः॥३-७२-९॥
केशिन्युवाच।
अथ यो ऽसौ तृतीयो वः स कुतः कस्य वा पुनः।
त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम्॥३-७२-१०॥
बाहुक उवाच।

पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः।
स नले विद्रुते भद्रे भाङ्गस्वरिमुपस्थितः॥३-७२-११॥
अहमप्यश्वकुशलः सूदत्वे च सुनिष्ठितः।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम्॥३-७२-१२॥
केशिन्युवाच।
अथ जानाति वार्ष्णेयः क्व नु राजा नलो गतः।
कथंचित्त्वयि वैतेन कथितं स्यात्तु बाहुक॥३-७२-१३॥
बाहुक उवाच।
इहैव पुत्रौ निक्षिप्य नलस्याशुभकर्मणः।
गतस्ततो यथाकामं नैष जानाति नैषधम्॥३-७२-१४॥
न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि।
गूढश्चरति लोके ऽस्मिन्नष्टरूपो महीपतिः॥३-७२-१५॥
आत्मैव हि नलं वेत्ति या चास्य तदनन्तरा।
न हि वै तानि लिङ्गानि नलं शंसन्ति कर्हिचित्॥३-७२-१६॥
केशिन्युवाच।
यो ऽसावयोध्यां प्रथमं गतवान्ब्राह्मणस्तदा।
इमानि नारीवाक्यानि कथयानः पुनः पुनः॥३-७२-१७॥
क्व नु त्वं कितव छित्त्वा वस्त्रार्धं प्रस्थितो मम।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय॥३-७२-१८॥
सा वै यथा समादिष्टा तत्रास्ते त्वत्प्रतीक्षिणी।
दह्यमाना दिवारात्रं वस्त्रार्धेनाभिसंवृता॥३-७२-१९॥
तस्या रुदन्त्याः सततं तेन दुःखेन पार्थिव।
प्रसादं कुरु वै वीर प्रतिवाक्यं प्रयच्छ च॥३-७२-२०॥
तस्यास्तत्प्रियमाख्यानं प्रब्रवीहि महामते।
तदेव वाक्यं वैदर्भी श्रोतुमिच्छत्यनिन्दिता॥३-७२-२१॥
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल।
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति॥३-७२-२२॥
बृहदश्व उवाच।
एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन।
हृदयं व्यथितं चासीदश्रुपूर्णे च लोचने॥३-७२-२३॥
स निगृह्यात्मनो दुःखं दह्यमानो महीपतिः।
बाष्पसंदिग्धया वाचा पुनरेवेदमब्रवीत्॥३-७२-२४॥
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः।
आत्मानमात्मना सत्यो जितस्वर्गा न संशयः॥३-७२-२५॥
रहिता भर्तृभिश्चैव न क्रुध्यन्ति कदाचन।
प्राणांश्चारित्रकवचा धारयन्तीह सत्स्त्रियः॥३-७२-२६॥
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति॥३-७२-२७॥
सत्कृतासत्कृता वापि पतिं दृष्ट्वा तथागतम्।
भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम्॥३-७२-२८॥
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुःखितः।
न बाष्पमशकत्सोढुं प्ररुरोद च भारत॥३-७२-२९॥
ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत्।
तत्सर्वं कथितं चैव विकारं चैव तस्य तम्॥३-७२-३०॥
बृहदश्व उवाच।
दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत्॥३-७३-१॥
गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके।
आब्रुवाणा समीपस्था चरितान्यस्य लक्षय॥३-७३-२॥

यदा च किंचित्कुर्यात्स कारणं तत्र भामिनि।
तत्र संचेष्टमानस्य संलक्ष्यं ते विचेष्टितम्॥३-७३-३॥
न चास्य प्रतिबन्धेन देयो ऽग्निरपि भामिनि।
याचते न जलं देयं सम्यगत्वरमाणया॥३-७३-४॥
एतत्सर्वं समीक्ष्य त्वं चरितं मे निवेदय।
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम॥३-७३-५॥
दमयन्त्यैवमुक्ता सा जगामाथाशु केशिनी।
निशाम्य च हयज्ञस्य लिङ्गानि पुनरागमत्॥३-७३-६॥
सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत्।
निमित्तं यत्तदा दृष्टं बाहुके दिव्यमानुषम्॥३-७३-७॥
केशिन्युवाच।
दृढं शुच्युपचारो ऽसौ न मया मानुषः क्वचित्।
दृष्टपूर्वः श्रुतो वापि दमयन्ति तथाविधः॥३-७३-८॥
ह्रस्वमासाद्य संचारं नासौ विनमते क्वचित्।
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम्।
संकटे ऽप्यस्य सुमहद्विवरं जायते ऽधिकम्॥३-७३-९॥
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः।
प्रेषितं तत्र राज्ञा च मांसं सुबहु पाशवम्॥३-७३-१०॥
तस्य प्रक्षालनार्थाय कुम्भस्तत्रोपकल्पितः।
स तेनावेक्षितः कुम्भः पूर्ण एवाभवत्तदा॥३-७३-११॥
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः।
तृणमुष्टिं समादाय आविध्यैनं समादधत्॥३-७३-१२॥
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः।
तदद्भुततमं दृष्ट्वा विस्मिताहमिहागता॥३-७३-१३॥
अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया।
यदग्निमपि संस्पृश्य नैव दह्यत्यसौ शुभे॥३-७३-१४॥
छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम्।
अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम्॥३-७३-१५॥
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः।
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि तान्यथ॥३-७३-१६॥
भूय एव सुगन्धीनि हृषितानि भवन्ति च।
एतान्यद्भुतकल्पानि दृष्ट्वाहं द्रुतमागता॥३-७३-१७॥
बृहदश्व उवाच।
दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम्।
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम्॥३-७३-१८॥
सा शङ्कमाना भर्तारं नलं बाहुकरूपिणम्।
केशिनीं श्लक्ष्णया वाचा रुदती पुनरब्रवीत्॥३-७३-१९॥
पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम्।
महानसाच्छृतं मांसं समादायैहि भामिनि॥३-७३-२०॥
सा गत्वा बाहुके व्यग्रे तन्मांसमपकृष्य च।
अत्युष्णमेव त्वरिता तत्क्षणं प्रियकारिणी।
दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन॥३-७३-२१॥
सोचिता नलसिद्धस्य मांसस्य बहुशः पुरा।
प्राश्य मत्वा नलं सूदं प्राक्रोशद्भृशदुःखिता॥३-७३-२२॥
वैक्लव्यं च परं गत्वा प्रक्षाल्य च मुखं ततः।
मिथुनं प्रेषयामास केशिन्या सह भारत॥३-७३-२३॥
इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः।
अभिद्रुत्य ततो राजा परिष्वज्याङ्कमानयत्॥३-७३-२४॥
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ।

भृशं दुःखपरीतात्मा सस्वरं प्ररुदोद ह॥३-७३-२५॥
नैषधो दर्शयित्वा तु विकारमसकृत्तदा।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत्॥३-७३-२६॥
इदं सुसदृशं भद्रे मिथुनं मम पुत्रयोः।
ततो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम्॥३-७३-२७॥
बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः।
वयं च देशातिथयो गच्छ भद्रे नमो ऽस्तु ते॥३-७३-२८॥
बृहदश्व उवाच।
सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत्॥३-७४-१॥
दमयन्ती ततो भूयः प्रेषयामास केशिनीम्।
मातुः सकाशं दुःखार्ता नलशङ्कासमुत्सुका॥३-७४-२॥
परीक्षितो मे बहुशो बाहुको नलशङ्कया।
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम्॥३-७४-३॥
स वा प्रवेश्यतां मातर्मां वानुज्ञातुमर्हसि।
विदितं वाथ वाज्ञातं पितुर्मे संविधीयताम्॥३-७४-४॥
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत्।
दुहितुस्तमभिप्रायमन्वजानाच्च पार्थिवः॥३-७४-५॥
सा वै पित्राभ्यनुज्ञाता मात्रा च भरतर्षभ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः॥३-७४-६॥
तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी॥३-७४-७॥
ततः काषायवसना जटिला मलपङ्किनी।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत्॥३-७४-८॥
दृष्टपूर्वस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम्॥३-७४-९॥
अनागसं प्रियां भार्यां विजने श्रममोहिताम्।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम्॥३-७४-१०॥
किं नु तस्य मया कार्यमपराद्धं महीपतेः।
यो मामुत्सृज्य विपिने गतवान्निद्रया हृताम्॥३-७४-११॥
साक्षाद्देवानपाहाय वृतो यः स मया पुरा।
अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम्॥३-७४-१२॥
अग्नौ पाणिगृहीतां च हंसानां वचने स्थिताम्।
भरिष्यामीति सत्यं च प्रतिश्रुत्य क्व तद्गतम्॥३-७४-१३॥
दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिंदम।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु॥३-७४-१४॥
अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलं तु तत्।
परिस्रवन्नलो दृष्ट्वा शोकार्त इदमब्रवीत्॥३-७४-१५॥
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम्।
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम्॥३-७४-१६॥
त्वया तु धर्मभृच्छ्रेष्ठे शापेनाभिहतः पुरा।
वनस्थया दुःखितया शोचन्त्या मां विवाससम्॥३-७४-१७॥
स मच्छरीरे त्वच्छापाद्दह्यमानो ऽवसत्कलिः।
त्वच्छापदग्धः सततं सो ऽग्नाविव समाहितः॥३-७४-१८॥
मम च व्यवसायेन तपसा चैव निर्जितः।
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे॥३-७४-१९॥
विमुच्य मां गतः पापः स ततो ऽहमिहागतः।
त्वदर्थं विपुलश्रोणि न हि मे ऽन्यत्प्रयोजनम्॥३-७४-२०॥
कथं नु नारी भर्तारमनुरक्तमनुव्रतम्।

उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित्॥३-७४-२१॥
दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात्।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति॥३-७४-२२॥
स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः।
श्रुत्वैव चैवं त्वरितो भाङ्गस्वरिरुपस्थितः॥३-७४-२३॥
दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम्।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत्॥३-७४-२४॥
दमयन्त्युवाच।
न मामर्हसि कल्याण पापेन परिशङ्कितुम्।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप॥३-७५-१॥
तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश॥३-७५-२॥
ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव।
अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने॥३-७५-३॥
तेन वाक्ये हृते सम्यक्प्रतिवाक्ये तथाहृते।
उपायो ऽयं मया दृष्टो नैषधानयने तव॥३-७५-४॥
त्वामृते न हि लोके ऽन्य एकाह्ना पृथिवीपते।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप॥३-७५-५॥
तथा चेमौ महीपाल भजे ऽहं चरणौ तव।
यथा नासत्कृतं किं चिन्मनसापि चराम्यहम्॥३-७५-६॥
अयं चरति लोके ऽस्मिन्भूतसाक्षी सदागतिः।
एष मुञ्चतु मे प्राणान्यदि पापं चराम्यहम्॥३-७५-७॥
तथा चरति तिग्मांशुः परेण भुवनं सदा।
स विमुञ्चतु मे प्राणान्यदि पापं चराम्यहम्॥३-७५-८॥
चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत्।
स विमुञ्चतु मे प्राणान्यदि पापं चराम्यहम्॥३-७५-९॥
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै।
विब्रुवन्तु यथासत्यमेते वाद्य त्यजन्तु माम्॥३-७५-१०॥
एवमुक्ते ततो वायुरन्तरिक्षादभाषत।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते॥३-७५-११॥
राजञ्शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः।
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान्॥३-७५-१२॥
उपायो विहितश्चायं त्वदर्थमतुलो ऽनया।
न ह्येकाह्ना शतं गन्ता त्वदृते ऽन्यः पुमानिह॥३-७५-१३॥
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते।
नात्र शङ्का त्वया कार्या संगच्छ सह भार्यया॥३-७५-१४॥
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह।
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः॥३-७५-१५॥
तदद्भुततमं दृष्ट्वा नलो राजाथ भारत।
दमयन्त्यां विशङ्कां तां व्यपाकर्षदरिंदमः॥३-७५-१६॥
ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः।
संस्मृत्य नागराजानं ततो लेभे वपुः स्वकम्॥३-७५-१७॥
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा।
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता॥३-७५-१८॥
भैमीमपि नलो राजा भ्राजमानो यथा पुरा।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत॥३-७५-१९॥
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना।
परीता तेन दुःखेन निशश्वासायतेक्षणा॥३-७५-२०॥
तथैव मलदिग्धाङ्गी परिष्वज्य शुचिस्मिता।

सुचिरं पुरुषव्याघ्रं तस्थौ साश्रुपरिप्लुता॥३-७५-२१॥
ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च।
भीमायाकथयत्प्रीत्या वैदर्भ्या जननी नृप॥३-७५-२२॥
ततोऽब्रवीन्महाराजः कृतशौचमहं नलम्।
दमयन्त्या सहोपेतं काल्यं द्रष्टा सुखोषितम्॥३-७५-२३॥
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम्।
वने विचरितं सर्वमूषतुर्मुदितौ नृप॥३-७५-२४॥
स चतुर्थे ततो वर्षे संगम्य सह भार्यया।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम्॥३-७५-२५॥
दमयन्त्यपि भर्तारमवाप्याप्यायिता भृशम्।
अर्धसंजातसस्येव तोयं प्राप्य वसुंधरा॥३-७५-२६॥
सैवं समेत्य व्यपनीततन्द्री। शान्तज्वरा हर्षविवृद्धसत्त्वा।
रराज भैमी समवाप्तकामा। शीतांशुना रात्रिरिवोदितेन॥३-७५-२७॥
बृहदश्व उवाच।
अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः।
वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम्॥३-७६-१॥
ततोऽभिवादयामास प्रयतः श्वशुरं नलः।
तस्यानु दमयन्ती च ववन्दे पितरं शुभा॥३-७६-२॥
तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा।
यथार्हं पूजयित्वा तु समाश्वासयत प्रभुः।
नलेन सहितां तत्र दमयन्तीं पतिव्रताम्॥३-७६-३॥
तामर्हणां नलो राजा प्रतिगृह्य यथाविधि।
परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत्॥३-७६-४॥
ततो बभूव नगरे सुमहान्हर्षनिस्वनः।
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथागतम्॥३-७६-५॥
अशोभयच्च नगरं पताकाध्वजमालिनम्।
सिक्तसंमृष्टपुष्पाढ्या राजमार्गाः कृतास्तदा॥३-७६-६॥
द्वारि द्वारि च पौराणां पुष्पभङ्गः प्रकल्पितः।
अर्चितानि च सर्वाणि देवतायतनानि च॥३-७६-७॥
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम्।
दमयन्त्या समायुक्तं जहृषे च नराधिपः॥३-७६-८॥
तमानाय्य नलो राजा क्षमयामास पार्थिवम्।
स च तं क्षमयामास हेतुभिर्बुद्धिसंमतः॥३-७६-९॥
स सत्कृतो महीपालो नैषधं विस्मयान्वितः।
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत॥३-७६-१०॥
कच्चित्तु नापराधं ते कृतवानस्मि नैषध।
अज्ञातवासं वसतो मद्गृहे निषधाधिप॥३-७६-११॥
यदि वा बुद्धिपूर्वाणि यद्यबुद्धानि कानिचित्।
मया कृतान्यकार्याणि तानि मे क्षन्तुमर्हसि॥३-७६-१२॥
नल उवाच।
न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव।
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव॥३-७६-१३॥
पूर्वं ह्यसि सखा मेऽसि संबन्धी च नराधिप।
अत ऊर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि॥३-७६-१४॥
सर्वकामैः सुविहितः सुखमस्म्युषितस्त्वयि।
न तथा स्वगृहे राजन्यथा तव गृहे सदा॥३-७६-१५॥
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव॥३-७६-१६॥
बृहदश्व उवाच।

एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा॥३-७६-१७॥
ततो गृह्याश्वहृदयं तदा भाङ्गस्वरिर्नृपः।
सूतमन्यमुपादाय ययौ स्वपुरमेव हि॥३-७६-१८॥
ऋतुपर्णो प्रतिगते नलो राजा विशां पते।
नगरे कुण्डिने कालं नातिदीर्घमिवावसत्॥३-७६-१९॥
बृहदश्व उवाच।
स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः।
पुरादल्पपरीवारो जगाम निषधान्प्रति॥३-७७-१॥
रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः।
पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः॥३-७७-२॥
स कम्पयन्निव महीं त्वरमाणो महीपतिः।
प्रविवेशातिसंरब्धस्तरसैव महामनाः॥३-७७-३॥
ततः पुष्करमासाद्य वीरसेनसुतो नलः।
उवाच दीव्याव पुनर्बहु वित्तं मयार्जितम्॥३-७७-४॥
दमयन्ती च यच्चान्यन्मया वसु समर्जितम्।
एष वै मम संन्यासस्तव राज्यं तु पुष्कर॥३-७७-५॥
पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः।
एकपाणोन भद्रं ते प्राणयोश्च पणावहे॥३-७७-६॥
जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु।
प्रतिपाणः प्रदातव्यः परं हि धनमुच्यते॥३-७७-७॥
न चेद्वाञ्छसि तद्द्यूतं युद्धद्यूतं प्रवर्तताम्।
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप॥३-७७-८॥
वंशभोज्यमिदं राज्यं मार्गितव्यं यथा तथा।
येन तेनाप्युपायेन वृद्धानामिति शासनम्॥३-७७-९॥
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर।
कैतवेनाक्षवत्यां वा युद्धे वा नम्यतां धनुः॥३-७७-१०॥
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव।
ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिम्॥३-७७-११॥
दिष्ट्या त्वयार्जितं वित्तं प्रतिपाणाय नैषध।
दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम्।
दिष्ट्या च ध्रियसे राजन्सदारो ऽरिनिबर्हण॥३-७७-१२॥
धनेनानेन वैदर्भी जितेन समलंकृता।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः॥३-७७-१३॥
नित्यशो हि स्मरामि त्वां प्रतीक्षामि च नैषध।
देवने च मम प्रीतिर्न भवत्यसुहृद्गणेः॥३-७७-१४॥
जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम्।
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि॥३-७७-१५॥
श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः।
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः॥३-७७-१६॥
स्मयंस्तु रोषताम्राक्षस्तमुवाच ततो नृपः।
पणावः किं व्याहरसे जित्वा वै व्याहरिष्यसि॥३-७७-१७॥
ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च।
एकपाणोन भद्रं ते नलेन स पराजितः।
सरत्नकोशनिचयः प्राणोन पणितो ऽपि च॥३-७७-१८॥
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत्।
मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम्॥३-७७-१९॥
वैदर्भी न त्वया शक्या राजापसद वीक्षितुम्।
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः॥३-७७-२०॥

न तत्त्वया कृतं कर्म येनाहं निर्जितः पुरा।
कलिना तत्कृतं कर्म त्वं तु मूढ न बुध्यसे।
नाहं परकृतं दोषं त्वय्याधास्ये कथंचन॥३-७७-२१॥
यथासुखं त्वं जीवस्व प्राणानभ्युत्सृजामि ते।
तथैव च मम प्रीतिस्त्वयि वीर न संशयः॥३-७७-२२॥
सौभ्रात्रं चैव मे त्वत्तो न कदाचित्प्रहास्यति।
पुष्कर त्वं हि मे भ्राता संजीवस्व शतं समाः॥३-७७-२३॥
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः।
स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः॥३-७७-२४॥
सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम्।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः॥३-७७-२५॥
कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी।
यो मे वितरसि प्राणानधिष्ठानं च पार्थिव॥३-७७-२६॥
स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः।
प्रययौ स्वपुरं हृष्टः पुष्करः स्वजनावृतः॥३-७७-२७॥
महत्या सेनया राजन्विनीतैः परिचारकैः।
भ्राजमान इवादित्यो वपुषा पुरुषर्षभ॥३-७७-२८॥
प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम्।
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभितम्।
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः॥३-७७-२९॥
बृहदश्व उवाच।
प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे।
महत्या सेनया राजा दमयन्तीमुपानयत्॥३-७८-१॥
दमयन्तीमपि पिता सत्कृत्य परवीरहा।
प्रस्थापयदमेयात्मा भीमो भीमपराक्रमः॥३-७८-२॥
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः।
वर्तयामास मुदितो देवराडिव नन्दने॥३-७८-३॥
तथा प्रकाशतां यातो जम्बूद्वीपे ऽथ राजसु।
पुनः स्वे चावसद्राज्ये प्रत्याहृत्य महायशाः॥३-७८-४॥
ईजे च विविधैर्यज्ञैर्विधिवत्स्वाप्तदक्षिणैः।
तथा त्वमपि राजेन्द्र ससुहृद्वक्ष्यसे ऽचिरात्॥३-७८-४॥